# गच्छाधिपति 'सिद्धांतमहोदधि' आचार्य भगवंत श्रीमद् विजयप्रेमसूरीश्वरजी म. सा. नी जीवन ज्योत

[कर्मसाहित्यना आ 'पअेसबंधो' (प्रदेश बंध) नामना चोथा ग्रंथनुं संपूर्ण प्रेसमेटर कर्म साहित्य सर्जनना प्रेरक परमपूज्य स्वर्गत परम गुरुदेवश्री आचार्य भगवंत श्रीमद् विजय प्रेमसूरीश्वरजी महाराजाअे अवलोकन अने संशोधन करेल. लगभग तैयार थयेला आ चोथा ग्रंथने तेओश्री निहाळे ते पहेलां ज क्रूर काले तेओश्रीना संयमपूत आत्माने आपणी वच्चेथी उपाडी लीधो. तेथी तेओश्रीना भव्य जीवननो अक्षर देह अहिं संक्षेपमां अंकित करीए छीए.]

प. पू. आचार्यदेव श्री विजयप्रेमसूरीश्वरजी महाराजा अेटले गुणोनी मूर्ति, शासनना स्तम्भ, तेमना आचारमां गुण, तेमना विचारमां गुण अने तेमनी वाणीमां य गुण ! अे गुणोनी फुलवाडीमांथी जेटला फुल-गुणो चूंटवा होय तेटला चूंटी लो.......

८९ वर्षना जीवनमां ६८ वर्षनुं साधुजीवन । ज्यारे तेओ 'प्रेमचंद' मांथी 'प्रेमविजय' बन्या त्यारथी मांडी तेओश्रीअे आंतरिक गुणसमृद्धिने ज वधारवानो निश्चय कर्यो अने प्रतिदिन, प्रतिवर्ष पोताना अे निश्चयने सफल बनावता बनावता तेओश्री गुणोना करोडपति बनी गया ! छतां तेओश्री तो अेमज बोलता 'मारामां अेवो कोई विशेष गुण नथी...' ज्यारे ज्यारे तेओश्रीनी शीतलछायामां बेसी तेमोने सांभलीअे त्यारे बीजाना गुणो सांभळवा मले क्यारे य पण तेओना मुखे तेओश्रीना गुणोनी प्रशंसा सांभळवा न मले ! आ ज तो तेओश्रीनी गुणसमृद्धि हती । नानामां नाना साधुना गुण तेमना ख्यालमां होय. बीजा जेने नगण्य समजे तेनी पण विशेषता तेओश्रीना चित्तमां वसेली होय. आ हतो तेओश्रीनो गुणवैभव !

स्वाध्यायमग्नता:-समग्र साधुजीवननो प्राण छे स्वाध्याय. पूज्यश्रीअे आ प्राण नुं जतन दसे प्राणोने लगावीने कर्युं हतुं, अेना परिपाकरूपे तेओश्रीअे कर्मसाहित्यनु मर्मग्राही पांडित्य प्राप्त कर्युं, ४५ आगम-ग्रन्थोनुं परिशीलन कर्युं, तेमांय छेदग्रन्थोना रहस्यो तो तेओअे आत्मसात् करी लीधां. आ बधानो विनियोग तेओश्रीए पोताना सुपात्र शिष्योमां कर्यो. ताजेतरमां तेओश्रीनी निश्रामां आठ मुनिवरो विपुल कर्मसाहित्यनुं संस्कृत-प्राकृत भाषामां सर्जन करी रह्या छे. लाखो श्लोक प्रमाण साहित्य लखाइ गयुं छे; अने छपाई रह्यं छे. पूज्यश्री आ बधां कार्योमां सतत रस लई सुयोग्य मार्गदर्शन पण आपी रह्या हता.

त्यागप्रियता:-तेओश्रीअे पोताना जीवनमां अपूर्व त्याग करीने आहारसंज्ञा पर विजय मेळव्यो हतो. साधुजीवनमां तेओश्रीअे ५० वर्ष जेटला दीर्घकाळथी फल, मेवा, मीठाई वगेरेनो त्याग कर्यो हतो. क्यारेक तो महिनाना महिनाओ सुधी मात्र बे ज चीज पर चलाव्युं हतुं. तेज रीते उपधि पण तेओश्री घणी ज अल्प राखता. पोताना अधिकारनुं अेके य पुस्तक के पेन न मले. जीवनना विविध क्षेत्रे तेओश्री त्यागनी भावनाने मूर्तिमंत बनावी शक्या हता.

उग्रसंयमपालन:-सादी अने निर्दोष गोचरी, समिति-गुप्तिनो जागतो उपयोग, महाव्रतोना जतनमां पूर्ण सावधानी ...तेमांय चतुर्थ महाव्रतनुं अणिशुद्ध पालन अने ते माटे 'नववाडो' ना रक्षण नी खूब खूब जागृति धर्मध्याननी निरन्तर लगन.... देशकथादि विकथाओथी विरक्ति....आ बधी वातोथी पूज्यश्रीनुं जीवन जीवंत संयमनुं दर्शन करावतुं हतुं.

आश्रितो प्रत्येना कर्तव्यपालनमां सदैव जागरूकता:-तेओश्रीअे पोताना संयमजीवन दरमियान सेंकडो आत्माओने चारित्री बनाव्या, जेना परिणामे आजे श्री जैनसंघमां तेओश्रीनो समुदाय सर्वाधिकसंख्यामां

मोजूद छे. आनाथी विशेष चढियाती वात तो ओ छे के तेओ कोई जीवने चारित्री बनाववामात्रमां इति कर्तव्यता न्होती समजता, परंतु ते आत्माना संयमविकासमां पण पूर्ण लक्ष आपता.

आश्रितो प्रत्ये तेओश्रीमां चार मुख्य गुणो तरवरी आवता (१) गंभीरता, (२)उदारता, (३) प्रेमाळता अने (४) सहिष्णुता, आ गुणोनो अपूर्व प्रभाव पण पड्यो हतो. जेमके मुनिगण तेओश्रीना पुनित सान्निध्यने वळगी रह्यो. आ चार गुणोना बळथी तेओश्रीओ अनेक मुनिओने अच्छा ज्ञानी बनाव्या, केई मुनिओने मोटा तपस्वी बनाव्या. केई मुनिओने उच्चकक्षाना व्याख्याता बनाव्या, अने केई मुनिओने संघमां ओभादार बनाव्या.

सर्वेच तपश्चर्या:-६०-६५ वर्षो सुधी निरंतर ओकासणानो तप. तेमां पण उणोदरी अने रसत्याग तो खरा ज ! द्रव्यसंक्षेप अने कायक्लेश पण साथे ज, उनाळो होय के शियाळो मध्याह्न वेलाओ बहार स्थंडिल जवानुं ते जवानुं ! उनाळामां पण दस दस अने पंदर-पंदर माइलोनो विहार करवानो ते करवानो ज !

शासन रक्षा.-ज्यारे ज्यारे भगवंत श्री जिनेश्वरदेवना शासन पर आंतरबाह्य आक्रमणो आवतां त्यारे तेओश्री बीजां बधां ज कार्यो गौण करी नाखता अने ओ आक्रमणोनो प्रतिकार करवामां ज पोतानी अने पोताना आश्रितोनी तमाम शक्तिओनो विनियोग करी देता, दा-त.-ज्यारे मुबइ राज्यनी विधानसभामां 'बालदीक्षा प्रतिबंधक' बील आव्युं त्यारे ते बील पास न थई जाय ते माटे तेओश्रीओ अथाग परिश्रम उठाव्यो हतो. ओवी रीते ट्रस्ट ओक्टना प्रसंगे. देवद्रव्यादिनी रक्षानी बाबतमां, भिक्षा-बील वखते...तेओश्री पोतानाथी शक्य प्रतिकार कर्या विना रह्या न हता. वृद्धावस्थामां पण ओक युवानने शरमावे तेटलुं काम करीने तेओश्री श्रीजिनशासन प्रत्येनुं ऋण फेडवा पुरुषार्थ कर्ये ज जता हता.

वेदनामां अपूर्व धैर्य.-पूज्यश्रीने वर्षोथी 'फरता वा' नो दु:खावो रह्यो. क्यारेक तो ओ दु:खावो माझा मूकी दे, छतां पूज्यश्रीना मुखे न कोई फरियाद के हाय वोय ! ओ तो ले पडखे दु:खावो थतो होय ते पडखुं दबावीने श्री अरिहंत परमात्माना जापमां लीन होय ! तेमांय छेल्ला छ सात वर्ष थी तो दर वर्षे कोईने कोई दर्दनो सखत हुमलो आवे, पण अपूर्व धैर्य अने अद्‌भुत सहन शक्ति तो ओमना ज. वातवातमां दवानुं नाम ले ओ पूज्यश्री नहीं ! ज्यां सुधी चाले त्यां सुधी तेओश्री दवाने अडकता ज नही. मुनिओना अत्याग्रह थी क्यारेक लेवी पडे तो ज्यां रोग हलको पडयो के दवाने अभराई पर चढावी दे ! दर्द हळवुं पडतां तुरत ज कर्मसाहित्यना सूक्ष्म पदार्थोना चिंतनमां डुबकी मारी दे ! समुदाय-संघ-शासननी चिंतामां लागी जाय !

महान ग्लान सेवा:-स्वसमुदायमां के परसमुदायमां ज्यां पूज्यश्रीने खबर पडी के 'साधु ग्लान' छे. तरत ज दोडी जाय. ग्लान साधुनी पासे बेसे, जाणे सगी मा बेठी, सांत्वन आपे, आराधनानुं लक्ष आपे, सेवामां साधुओ आपे; पोते वारंवार आव-जा कर्या करे.

पूज्यश्री रात्रे निद्रा पण मात्र बे-त्रण कलाक ले. बाकी संपूर्ण रात्रिओ तेओ भला अने तेओश्रीनुं स्वाध्याय-ध्यान भलुं !

धार्मिक कार्यो शासननी प्रभावना:-पूज्यसूरिभगवंते गुजरात, सौराष्ट्र, महाराष्ट्र, खानदेश, राजस्थान वगेरे प्रदेशोमां हजारो माइलोनो विहार करीने लाखो मनुष्योमां धर्मजागृति प्रसरावी, सेंकडो जीवोने संयमी बनाव्या, अनेक जिनमंदिरनां निर्माण कराव्यां. पूज्यश्रीनी निश्रामां अनेक प्रतिष्ठाओ अंजन-शलाकाओना भव्य महोत्सवो उजवाया. लाखो रुपियानां दानदेवायां. श्री शत्रुंजयगिरिराज आदि तीर्थोना संघ नीकल्या खास करीने मुंबई-अमदावादमां तेमज राजस्थानमां तेओश्रीना वरद हस्ते अनेक शासनप्रभावनानां कार्यो थयां.

अहीं तो मात्र तेओश्रीना गुणोने ज गावानो प्रयत्न कर्यो छे. बाकी तेओश्रीना जीवनमां ओवा अनेक प्रसंगो पडेला छे के जेमां तेओश्रीना भव्य व्यक्तित्वनां दर्शन थई शके.

शासनना .. संघना श्रध्येय, श्रद्धेसो साधुओना परमगुरु, तप-त्याग-संयममूर्ति ज्ञानगरिष्ठ पूजनीय आचार्य भगवंतना ओ सद्‌गत आत्माने कोटि कोटि वंदन !

२५ ५-६८ ना 'जैन' साप्ताहिकमांथी उद्धृत.

# जैनसंघना ज्योतिर्धरनो समाधिपूर्ण स्वर्गवास

संघकौशल्याधार, वात्सल्यवारिधि, सिद्धांतमहोदधि, कर्मशास्त्रविशारद, ३०० मुनिओना नेता, जैनशासनना ज्योतिर्धर, शासनशिरताज गच्छाधिपति, प० पू० आचार्य भगवंत श्रीमद् विजय प्रेमसूरीश्वरजी महाराजा संवत् २०२४ ना वैशाख वद ११ ने बुधवारे रात्रे १०-४० मिनिटे प. पू० आचार्यदेव श्रीमद्-विजय रामचंद्रसूरीश्वरजी महाराज आदि ७० मुनि भगवंतो, तथा संघनी हाजरीमां साधुभगवंतोना मुखे नवकार-मंत्र, चत्तारि मंगलं आदिनुं श्रवण करता करता तथा स्वयं वीर वीरनुं नाम जपता जपता, सहुने खमावीने कर्मविपाकनुं चिंतन करता समाधिपूर्वक कालधर्म पाम्या.

पू० सूरीश्वरजी जैनशासनमां आबालगोपाल प्रख्यात छे. पूज्यश्रीनुं जीवन रत्नत्रयीनी भव्य साधनाथी ओतप्रोत हतुं. त्रणसो साधुओना ए शिरताज हता. अनेक महात्माओना तथा संघोना आश्रयभूत हता. संयम-बगीचाने खीलवनार ए कुशल माळी हता. ए महापुरुषनी अंतिम पळो केटली समाधिमय अने आराधनामय हती तेनु टूंकमां आलेखन करवानो आ प्रयास छे.

आ महापुरुषने छेल्ला छ सात वर्षथी हार्टनी (हृदयनी) तकलीफ अवारनवार थती अने त्यारथी तेओ विहार करी शकता नहि. भक्तशिष्यो पू० श्री ने शिबिकामां उंचकी विहार करावता. गत जेठ सुद १० मे पू०श्री खभात पधार्या. दिवालीथी स्वास्थ्य बगडवा मांड्युं पण वच्चे थोडुं थोडुं सारुं थतुं हतु, चैत्र वद ८-९ ना दिवसोमां श्वासनी तकलीफ खूब ज थवा मांडी पण योग्य उपचारथी बेसी गई. त्यार पछी पण अवारनवार श्वासनी तकलीफ उपडती अने उपचारथी बेसी जती.

जीवनना छेल्ला चार दिवस थी तेओ स्वस्थ हता. वैशाख वद ११ ना दिवसे पण आखो दिवस स्वस्थता हती. ते दिवसे पण पधरावेल श्री पार्श्वनाथ भगवंतना त्रण वार दर्शन कर्या. छेल्ला दिवसोमां तेओश्री रोज त्रिकाल दर्शन करता हता. बपोरे मकानमां अेकवार शिष्योना हाथ पकडीने आंटो मार्यो, मकानमां मांकडनी विराधना वधी जवाना कारणे विराधनाना भयथी तेओ श्री मकान बदलवानो विचार करतां छेवटे सांजे पोताना होल मांथी बीजा होलमां तेओश्रीनी पाट लाववामां आवी, ते वखते पण तेओश्री त्यां चालता ज आव्या हता.

सांजे प्रतिक्रमण स्वस्थता पूर्वक करी संथारा पोरिसि भणावी. त्यार बाद अेक मुनि पासे केटलांक स्तवनो सांभल्यां, त्यार पछी अेक बालके त्रण स्तवन संभळाव्यां. ते पण दत्तचित्ते सांभल्यां.पछी पण बीजा अेक मुनिअे झांझरीया मुनिवरनी सज्झायनी चोथो ढाळ "अणसण खामण" संभलावी ते पण दत्तचित्ते सांभली, त्यार पछी लगभग नव वागे सूरिमंत्रनो पट गणवा माटे मूकाव्यो. इरियावही करी पण अंदर मुंझवण थवा मांडी अेटले पट गणवानो रहेवा दीधो, श्वासनी तकलीफ वधवा मांडी, साथे रहेला मुनिवरो स्तवन-सज्झायादि संभळाववा लाग्या, तेटलामां पूज्यश्री स्थंडिल जई आव्या, स्थंडिलथी उठ्या पछी शरीरमां अस्वस्थता, पीडा वधवा मांडी साथे साथे अंदरनी जागृति पण वधवा मांडी, जाणे. तेओ श्री समजी गया के आ मारी छेल्ली अवस्था छे. अने तेथी "वीर वीर" नुं नाम जपवा लाग्या "शुं थाय छे ? दुखावो थाय छे ?" वगेरे पूछतां "मारा कर्मनो उदय छे. मने संभळावो, हुं खमावुं छुं." आम पोते जाते ज कहेवा लाग्या. आजु-बाजु प० पू० आचार्यदेव श्रीमद् रामचंद्रसूरीश्वरजी महाराजादि ७० मुनिभगवतो तथा श्रावकगण उपस्थित हतो. मुनिओ "चत्तारि मंगलं .. एगो हूं नत्थि मे कोई .. अरिहंतो मह देवो... खामेमि सव्व जीवे वगेरे संथारा पोरिसिनी गाथाओ संभळाववा लाग्या, पूज्यश्री खूब सावधानीथी सांभळता हता. जागृत छो ? अेम पूछतां इशाराथी हा पाडी, आम अडधो कलाक लगभग व्यथा चाली, पण खूब ज सावधानी अने समता हती तेओ श्री बेठा हता ते लगभग साडा दश वागे पाट उपर आडा ढळी पड्या. तेओश्रीना पट्टालंकार प० पू० आचार्य-

देव श्रीमद् विजय रामचंद्रसूरीश्वरजी महाराजा आदिअे छेल्ले कानमां जोरथी नवकार संभळाव्या. अने आम नवकार मंत्रने सांभळता सांभळता १०-४० मिनिटे तेओश्रीनो आत्मा ६७।। वर्षना निर्मल चरित्रने पाळी जिन शासननी आराधना द्वारा स्व-परनो अपूर्व उपकार करी परलोकमां प्रयाण करी गयो.

मुनिओअे आधार स्तंभ गुमाव्यो, संघे एक कावेल सुकानी खोयो, शासननो शिरताज चाल्यो गयो, अध्यात्म-जगत नो तेजस्वी सूर्य आथमी गयो, संयमना बगीचाने खीलवी विकसित करनार माली अदृश्य थयो.

मुनिओअे वज्रघात अनुभव्यो, साधु-साध्वीओ रडी रह्या, श्रावको रड्या, श्राविकाओ रडी सौ गमगीन बनी गया, समाचार फेलातां वातावरण शून्य बन्युं. वद १२ नी प्रभाते लोको खभातमां उमटवा मांडया हजारो लोको अेकत्र थया. खंभातना जैन जैनेतर सर्वेअे कामकाज व्यवहार-व्यवसाय बंध राखी अंजली आपी. बार वागे जैनशाळानो होल चिक्कार भरायो, अंतिम संस्कारने लगती उछामणीओ शरु थई. हजारोना आंकडा वधता चाल्या, रु.३१००१ नी उछामणी अग्निसंस्कारनी थई. बीजी पण तेटली अ लगभग थई. १ वागे निकलेली स्मशान यात्रा ४ वागे अग्निसंस्कारना स्थले पहोंची, अते, अग्निअे तेमना देहने भस्मीभूत कर्यो पण तेमनी संयम यात्रा तो अमर थई गई.

कोटिकोटि वंदन हो अे स्व-पर कल्याणना चिंतक, परमसंत, अध्यात्मयोगीने जैनशासनना सुकानी स्वर्गत सूरीश्वरजीने !

# भारतीय-प्राच्य-तत्त्व-प्रकाशन समितिना ग्रन्थ प्रकाशनमां लखाएली रकमो

# ग्रन्थ प्रकाशनमां सहायकोनी शुभ नामावली

★

## ग्रन्थ प्रकाशन सहायको

२००००) श्री गुजराती श्वे० तपागच्छ ज्ञानखाता कलकत्ता

१००००) पूज्य आचार्य देव श्री दानसूरीश्वरजी ज्ञान मन्दिर पौषधशाला, ज्ञान खातामांथी अमदावाद

१००००) शा. खूबचन्दजी अचलदासजी तथा रतनचन्दजी हीराचन्दजी पिंडवाड़ा

१००००) श्री पिंडवाड़ा सघना ज्ञानखाता ,,

१००००) ५०००) शा. लालचन्द छगनलाल पिंडवाड़ा तथा ५०००) श्री सादड़ी पाटीयानो उपाश्रय तरफथी ह० पुखराजजी हीराचन्दजी

१००००) शा. भायचंदजी रायचंदजी हंसाजी पिंडवाडा

१००००) सादडीया कुटुम्ब तरफथी

1. हीराचन्दजी गुलाबचन्दजी ,,
2. भूरमलजी सरेमलजी ,,
3. अमुतमलजी कस्तूरचन्दजी ,,
4. मनरूपचन्दजी जवानमलजी ,,
5. वीरचन्दजी पूनमचन्दजी ,,

१००००) शेठ चम्पकलाल नवलचन्द दमणवाला, शेठ सौभागचन्द नवलचन्द दमणवाला

१००००) शेठ शांतिदास खेतसी ट्रस्ट तरफ थी

१००००) शेठ हीराचन्दजी जेरूपजी पादरलीवाला (कुमार एजेन्सीज बम्बई)

१००००) शेठ छगनलाल कस्तूरचन्द बम्बई

१००००) शेठ जीवतलाल प्रतापसीभाई ,,

१००००) शेठ चेलाजी वनाजी कोल्हापुर

१००००) श्री तपागच्छ अमर जैन शाला ज्ञानखातामांथी खंभात

१००००) सुरेन्द्रनगर जैनसंघ ज्ञानखातामांथी सुरेन्द्रनगर

१००००) दशापोरवाड जैन संघ ज्ञानखाता मांथी अमदावाद

६०००) पिंडवाड़ा बहेनोना ज्ञानखाता नी उपज मांथी

५०००) श्री विद्याशाला जैन संघ अमदावाद

५०००) श्रीमती कान्ता बहेन हिन्दुमलजी राठोड कोल्हापुर

५०००) शेठ पन्नालालजी पूनमचन्दजी सादड़ी

५०००) शेठ गुलाबचन्द गफलभाई घाटकोपर बम्बई

५०००) शेठ रमणलाल वजेचन्द अमदावाद

५०००) कान्तिलाल चिमनलाल कोलसावाला ,,

५०००) शेठ रमणलाल चिमनलाल ,, ,,

५०००) श्री गिरधर नगर जैन संघ ज्ञानखाता ,,

५०००) शेठ हुकमीचन्दजी राठौड़ कोल्हापुर

५०००) शेठ मन्नालालजी रीखबाजी लुणावा

५०००) शेठ मूलचन्द बाबाभाई दलाल खंभात

५०००) शेठ कल्याणभाई मणीलाल अमदावाद

५०००) शेठ अमृतलाल हरगोविंददास ,,

५०००) शेठ खेताजी घनाजी बम्बई

५०००) शेठ दत्तुभाई नीपाणी

५०००) शेठ मनुभाई कल्याणभाई अमदावाद

## जनरल फण्ड

२५०१) शेठ जेठालाल चुनीलाल घीवाला बम्बई

१५०१) शेठ मिश्रीमल कुन्दनमल (घाणेराव) अमदावाद

१२०१) श्री जावाल जैन संघ, जावाल

१०००) श्री वीरमगाम जैन संघ, आणंदजी कल्याणजी पेढी, वीरमगाम

१२०१) शेठ टेकचन्दजी नथमलजी नाणा (राज०)

१०००) छोटालाल नगीनदास पीपल गांव

१०००) शेठ रजनीकांत दलीचन्द दोसी बम्बई

१००१) शेठ चुनीलाल गुलाबचन्दजी जावाल
१००१) पूज्य साध्वीजी म० रत्नप्रभाश्रीना सद्-उपदेशथी स्व० शेठ अमृतलाल मोहनलालना श्रेयार्थे
ह० चिमनलाल मोहनलाल अमदावाद
१००१) अर्चेन्ट सोसाइटी ,,
१००१) शेठ पोपटलाल पुरुषोत्तमदास बम्बई
१००१) शेठ गोबिन्दजी जेवंत खोना ,,
१००१) शेठ बाबचन्द रामचंद दूधवाला ,,
१००१) शेठ मानजी धरमसी शापरीआ ,,
१००१) शेठ सोमचन्द पानाचन्द ,,
१०००) श्री अधेरी गुजराती जैन संघ ,,
१००१) श्री नवाडीसा जैन संघ नवाडीसा
७००) शेठ जीवराज नानचन्द सूरत
५००) पू० आ० श्री सिद्धिसूरीश्वरजी ना आज्ञावर्ती साध्वीजी म० सूर्याश्रीजीनी मारफत ज्ञान-पूजाना ह० हीरालाल मणीलाल
५००) श्री ओसवाल जैन संघ खंभात
५००) श्री नवसारी जैन संघ पार्श्वनाथ भगवाननी पेढी नवसारी
२५०) श्री खानपुर जैन संघ अमदावाद
११०) श्री दसापोरवाड सोसाइटी ,,
५००) श्री मांडवी जैन संघ मांडवी
५००) शेठ प्रेमचन्दजी पारसमल बम्बई
५०१) शेठ सोहनराजजी रूपाजी ,,
५०१) बाईभूरी बालाभाई सांकलचन्द सामलानी पोल अमदावाद
१०१) धीरजलाल दामजी मांडवी
१०१) पंकज सोसाइटी अमदावाद
३२५) दशा पोरवाल सोसाइटी ,,
(परचुरण खरडाना)
२०१) श्री संवेगी उपाश्रय हाजापटेलनी पोल ,,
१०१) शेठ लालचन्दजी राजमलजी ,,
१०१) गंगाबेन मोहनलाल

## सेटना ग्राहको

१५०५) शेठ दलीचन्द धरमाजी खडकी पूना

१००) श्री कालुशीनी पोलना उपाश्रय ज्ञानखाता मांथी
३०१) अहमदनगर जैन संघ रिषभ-संभव-जैन श्वे० संघ
३०१) पंच पोरवाल ज्ञानखातु कालिन्द्री (सिरोही)
३०१) श्री अमलनेर जैन संघ
३०१) श्री नंदरबार जैन संघ
३०१) मालेगांव जैनसघ गुजराती पच
३०१) श्री भीवंडी जैन सघ भीवंडी
३०१) श्री पांचोरा जैन सघ पांचोरा
३०१) श्री जलगांव जैन संघ जलगांव
३०१) श्री सगमनेर जैन संघ संगमनेर
३०१) श्री लींच जैन सघ लींच
३०१) मुनि श्री केवलविजयजीना उपदेश थी
३०१) श्री पालेज जैन संघ पालेज
३०१) श्री नडीयाद जैन सघ नडीयाद
३०१) श्री मणीयारनो उपाश्रय राधनपुर
३०१) शेठ लखमीचन्द अम्बालाल अमदावाद
३०१) शेठ रायचन्दजी लुम्बाजी पिंडवाडा
३०१) शेठ माणेकचन्द छत्राजी झाडाली
३०१) शेठ बाबुभाई मोहनलाल पाटणवाला बम्बई
३०१) शेठ रमणलाल जेसींगभाई जरीवाला
३०१) शेठ मूलचन्द रामचन्द दशापोरवाड
३०१) चन्दुलाल जीवाभाई ,,
३०१ शेठ मोहनलाल छोटालाल ,,
३०१) शेठ मयाभाई मणीलाल ,,
३०१) अजवाली बेन के० पोपटलाल नरसींगदास अमदावाद
३०१) जयंतीलाल मोतीलाल कोटवाल ,,
३०१) मणीलाल प्रेमचन्द कीनखाबवाला ,,
३०१) महासुखभाई कचराभाई ,,
३०१) फूलचन्द कालीदास ,,
३०१) घेलाभाई महासुखभाई ,,
३०१) मयाभाई लखमीचन्द ,,

३०१) शेठ नगीनदास चंदुलाल अमदावाद
३०१) हिंमतलाल मणीलाल ,,
३०१) पानाचन्द मंगलचन्द ,,
३०१) भोगीलाल देवचन्द ,,
३०१) अमृतलाल मोहनलाल ,,
३०१) कंवरलाल हिम्मतलाल ,,
३०१) श्री विश्वनंदीकर जैन रीलीजीयन ट्रस्ट सोसाइटी अमदावाद
६०१) श्री विश्वनंदीकर जैन संघ ,,
३०१) शेठ मनुभाई लल्लुभाई चबीयाली ,,
३०१) शेठ सुधाकरभाई मनसुखराम ,,
३०१) शेठ रतीलाल केशवलाल ,,
३०१) श्री सिद्धार्थ सोसायटी पाठशाला ,,
३०१) शेठ गिरधरलाल कालीदास ,,
३०१) शेठ चन्द्रकांत मणीलाल पटेल ,,
३०१) शेठ मयाभाई साकरचन्द ,,
६०१) श्री संवेगी पगथीयानो उपाश्रय ,, हाजा पटेलनी पोल,
३०१) शेठ शंकरलाल छोटालाल जैन नगर अमदावाद
३०१) शेठ छोटालाल लल्लुभाई वारैयावाल ,,
३०१) शेठ मोहनलाल जमनादास ,,
३०१) शेठ कांतीलाल त्रीकमलाल ,,
३०१) शेठ चन्दुलाल मोहनलाल स्वस्तिक सोसाइटी ,,
३०१) शेठ अमृतलाल दलसुखभाई हाजी शांतिनगर ,,
३०१) श्रीमती लीलावती रमणलाल राजेन्द्रकुमार ,,
३०१) पूज्य पं० श्री रंजनविजयजी म० ना सदुपदेशथी श्री नीपाणी जैन संघ नीपाणी
३०१ शेठ भगवानजी तेजमलजी पिंडवाडा
३०१) शेठ भबुतमलजी आयदानमलजी पावरली बम्बई
३०१) श्री लालबाग जैन उपाश्रय बेनोतरफथी ,,
३०१) शेठ रतीलाल मंगळजी ,,
३०१) शेठ हिंमतलाल खूबचन्द ,,
३०१) शेठ सोमचन्द पोपटचंद खंभात ,,
३०१) श्री चन्द्रमणिबेन मावजीभाई ,,
३०१) शेठ रणछोडदास शेवकरण ,,
३०१) शेठ कांतीलाल मणीलाल बम्बई
३०१) शेठ दलसुखभाई नाथालाल ,,
३०१) शेठ रतीलाल कचराभाई ,,
३०१) शेठ छोटालाल वस्ताचंद ,,
३०१) शेठ सौभागचन्द लल्लुभाई ,,
३०१) शेठ परशोतमदास छोटालाल ,,
३०१) भोगीलाल वाडीलाल ,,
३०१) भवानजी लखमशीनी कं० ,,
३०१) शेठ केशवलाल चुनीलाल ,,
३०१) शेठ मणीलाल सौभागचन्द दोसी सुदानवाला ,,
३०१) शेठ प्राणलाल सुन्दरजी ,,
३०१) सावननी बेनो तरफथी हु० छगनभाई ,,
३०१) नवलबेन साकलचन्द वीरचन्द ,,
३०१) मनफरा जैन संघ ज्ञान मन्दिर ,, (हु० मुलजी धनजी)
३०१) चन्दनबेन चीमनलाल चकाभाई ,,
३०१) शेठ गांगजी मानजी (श्री देवपुर, कच्छ) हु० सुरचन्दभाई ,,
३०१) शेठ अमृतलाल मगनलाल वालोडीया बम्बई
३०१) श्रीमती मणीबेन अमृतलाल झीणाभाई ,,
३०१) शेठ रमणीकलाल बाबुलाल ,,
३०१) मुरबाड जैन संघ हु० सुरचन्दभाई ,,
३०१) शेठ हस्तीमलजी बालचंदजी ,,
३०१) त्रण बहेनो मळीने ,,
३०१) बहेन मृदुला चिमनलाल जगाभाई ,, (दशापोरवाल सोसाइटी अमदावाद)
३०१) शेठ शांतिलाल नगीनदास दशापोरवाल सोसाइटी अमदावाद
३०१) पूज्य साध्वीजी म० रोहीणाश्रीजी मारफत रमणलाल वजेचन्द ,,
३०१) पूज्य साध्वीजी म०कंचनश्रीजी ढालनी पोलना अमदावाद
३०१) श्री नवाडीसा जैन संघ नवाडीसा

३०१) शकरीबेन चुनीलाल पद्मशी साणंद
३०१) मीठालाल कल्याणचन्द पेढी कपडवंज
३०१) श्री वाव जैन संघ वाव
३०१) श्री तपागच्छ जैन उपाश्रय, शामलापोल, अहमदाबाद
३०१) शेठ कांतीलाल साकरचन्द मोकलचन्द ,,
३०१) शेठ जीवराज नानचन्द चाहवाला सूरत
३०१) श्री चोपाटी जैन संघ ह०सुधाकरमाई बम्बई
३०१) श्री धुलीया जैन संघ शीतलनाथ भगवाननी पेढा धुलीया
३०१) सघवी देवकरण मुलजी जैन पेढी जैन संघ मलाड (बम्बई)
३०१) विजय देवेन्द्रसूरीश्वरजी जैन ज्ञान भंडार मांडवी (कच्छ)
ह०लालजी आसकरण मांडवी कच्छवालानी धर्मपत्नी सामुबाई
३०१) श्री गांधीधाम जैन संघ गांधीधाम
३०१) श्री लीलावतीबेन रसीकलाल पाटणवाला बम्बई
३०१) श्री जैन श्वे० महासभा उत्तरप्रदेश हस्तीनापुर (मेरठ)
३०१) श्री लुणावा जैन सघ ह० मनालालजी लुणावा (राजस्थान)
३०१) मोहनलाल श्रीभोवनदास मुंबई
३०१) रसीकलाल चुनीलाल दशापोरवाड
३०१) जुनाडीसा जैनसंघ जूना डीसा
३०१) रतीभाई मणीलाल कापडीआ अमदावाद

॥ ॐ ह्रीँ अर्हं नमः ॥

॥ श्रीशङ्खेश्वरपार्श्वनाथाय नमः ॥

॥ सकलागमरहस्यवेदिपरमज्योतिर्विच्छ्रीमद्विजयदानसूरीश्वरसद्गुरुभ्यो नमः ॥

* 卐 *

प्रवचनकौशल्याधार-सुविहिताग्रणी-गच्छाधिपति-परमशासनप्रभावक-सिद्धान्तमहोदधि-
कर्मशास्त्रनिष्णाता-ऽऽचार्यदेवश्रीमद्विजयप्रेमसूरीश्वरपादानां पुण्यतमनिश्रायां
तदन्तेवासिवृन्दविनिर्मितं मुनिश्रीजयघोषविजय-धर्मानन्दविजय-
वीरशेखरविजयसंगृहीतपदार्थकं मुनिश्रीवीरशेखरविजय-
विरचितमूलगाथार्क प्रेमप्रभाटीकाविभूषितम्

# बंधविहाणं

तत्र

प्रेमप्रभाटीकाप्रमलङ्कृतः

(मूलपयडि-)

# पएसबंधो

(मूलप्रकृति-प्रदेशबन्धः)

卐

टीकाकारमङ्गलवचनानि

(प्रेमप्रभाटीका)—

卐 विश्वाध्यक्षो वृषाङ्को ★ वृषत्रिभुविभवो विश्वविस्तीर्णवर्णः □,
❖ शैवेयो विश्वत्राता ✻ जलरुहमिव यश्छेदयामास बन्धम् ।
एकान्तध्वान्तभेदी नतनयनिपुणश्चित्रगुर्निष्कलङ्कः ,
● श्रीवीरो ✻ भक्तपार्श्वोऽतिमिहिरसुषमः श्रेयसे नोऽस्तु सार्वः ॥१॥

---

卐 श्लेषोल्लसितवृषभ-शान्ति-नेमि-पार्श्व-वर्धमानजिनपञ्चकस्तुत्यात्मकं स्रग्धरावृत्तम् ।

★ आदिनाथपक्षे– वृष=वृषभः, 'ऋषभो वृषभो वृषः' इत्यभिधानचिन्तामणिः, अङ्कः=चिह्नम्, वृषोऽङ्को यस्येति विग्रहश्चायः । शेषजिनचतुष्कपक्षे– वृषः=अहिंसादिलक्षणो धर्मः, तदुक्तमभिधानचिन्तामणौ– "धर्मः पुण्यं वृषः" इति, अङ्कः=ध्वज, विग्रहशरीरं तु पूर्ववदेव ।

□ वर्णशब्देनाऽत्र शारीरिकवर्णो बोध्यः, यद्वा वाचादीनां गुणा ज्ञेयाः, अथवा निर्मलयशोऽवगन्तव्यम् । तदुक्तं—"वर्णोऽक्षरे गुणे यशसि" इति ।

यदीयः स्वान्ताब्धिर्मधुरवचनोद्दाममरुता,
विकारं नीतो नो ललितललनानां सुरपतेः ।
यदीयां गां श्रोतुं परममुदयाऽऽयान्ति हरयः,
जिना वीरान्तास्ते प्रददतु शमं नोऽनवरतम् ॥२॥ [शिखरिणी]

रागद्वेषौ विजेता गणधरनिवृतो ग्रामणीर्योगिराजाम्,
यो नाकेशे सशङ्के सति विपुलबली कम्पयामास मेरुम् ।
गर्भेऽम्बार्तिर्न भूयादिति निजजननीभक्तये निश्चलोऽभूत्,
लोकाध्यक्षः स वीरो भविकजनकुमुद्बोधजैवातृकः स्तात् ॥३॥ [स्रग्धरा]

ज्योतिर्विदां परतमो व्रतिनां वरेण्यः,
प्रश्नोत्तरेषु चतुरस्तरणिप्रतापी ।
श्रीदानसूरिरचलः कृतिसत्त्ववादे,
कक्षीकरोतु सततं मम दासभावम् ॥४॥ [वसन्ततिलका]

स्वाध्यायध्यानमग्नः प्रवरगुणनिधिः कर्मसाहित्यनिष्णः
सिद्धान्ते सिद्धबुद्धिः शमरसजलधी राजते प्रेमसूरिः ।
गच्छाकाशे विशाले ★भमुनिपरिवृतो 卐राजराजप्रकारः,
दृष्ट्वा यं *चं चकोरीव चतुरमुनिधीः संनरीनर्ति शुभ्रा ॥५॥ [स्रग्धरा]

---

आद्यपृष्ठटीप्पनकम्

❖ नेमिनाथपक्षे- शिवाया =समुद्रविजयनृपतिजायाया अपत्यं पुमान् शैवेयः, 'द्विस्वरादनद्याः' (सिद्धहेम० ६।१।७१) इति 'एयण्' प्रत्ययः । शेषजिनचतुष्कपक्षे- शिवा=कल्याणकारिणी वनिता, विग्रहकाय: प्रत्ययश्च यथोक्त एव ।

* शान्तिनाथपक्षे- विश्वसेन इति शान्तिनाथस्य पितुर्नाम, 'ते लुग्वा' (सिद्धहेम० ।३।२।१०८। इति सूत्रेण सेनपदस्य लुकि विश्वः, यद्वा भीमो भीमसेनः' इति न्यायाद् विश्वोऽपि विश्वसेनः, तातः=पिता, विश्वस्तातो यस्येति विग्रहशरीरम । शेषजिनचतुष्कपक्षे- तनोति विस्तारयतीति तात, तनोति हि भगवान् जगज्जन्तुजातजातिजरामरणादिदुःखप्रवृद्धज्वालाकलापकलितोद्दामतदावानलदमनैकनिदानमूतमधुरवचनवारिवृष्ट्यादिना बाह्याभ्यन्तरलक्ष्मीम, विश्वस्य=विश्ववर्तिसत्त्वसमूहस्य तात इति विश्वतातः ।

● वर्धमानस्वामिपक्षे- श्रिया घनघातिकर्मकदम्बकविदारणेन प्राप्तयाऽचलातुलामलकेवलज्ञानस्वरूपया युक्तो वीरः श्रीवीर. । शेषजिनचतुष्कपक्षे-विग्रहस्वरूपं यथोक्तमेव, परं 'श्रीवीरः' इति पदं विशेषणवाचकमवगन्तव्यम् ।

※ पार्श्वनाथपक्षे- पार्श्वं =पार्श्वनामा वैयावृत्यकरो यक्षः, भक्त. पार्श्वो यस्येति विग्रहः । शेषजिनचतुष्कपक्षे- भक्तानां स्वं प्रणिदधानानां भक्तजनानां पार्श्वः-पार्श्वस्थ इति भक्तपार्श्वः ।

★ "नक्षत्रं तारका ताराज्योतिषी भमुडु ग्रहः.............." इत्यभिधानचिन्तामणिः ।

卐 "चन्द्रस्तु मास्तपोराजौ...............................राजराजो..........................इति शेषनाममाला" ।

• 'चस्तरौ चन्द्रचौरयोः' इत्येकाक्षरनाममाला ।

यस्य करुणाप्रभारङ्गसङ्गतो मामकं मतिसरोजम् ।
संक्षिप्तमपि विकस्वरतां प्राप्तं स्वगुरुसाम्राज्ये ॥६॥ [महाविपुलार्या]
विस्तीर्णेऽसौ सचिवीयन् पंन्यासपदभूषितो जीयात् ।
चित्रपवित्रचरित्रः हेमन्ताह्वः प्रगुरुतरणिः ॥७॥ [युक्मवि०]युग्मम् ।

गुणैर्ललितशेखरं ललितशेखरं नामतः,
सहोदरवरं गुरुं ललितसंयमश्रीपतिम् ।
पवित्रगुणमन्दिरं शमरसाम्बुधिं मूर्तशं,
जितेन्द्रियकदम्बकं स्मरणमानये भावतः ॥८॥ [पृथ्वी]

विवरणेऽतिदुर्गेऽस्मिन्, दिग्दर्शनपरायणान् ।
प्रतिवृन्दारकानत्र स्मरणपथमानये ॥९॥ [अनुष्टुब्]

यस्याः कृपाकृपाणी सन्देहलताविलासविस्तारम् ।
छिन्ते सा वाग्देवी मे वचनविलासदाऽस्तु सदा ॥१०॥ [पथ्यार्या]

हरिभद्रादिसूरीणां, क ज्ञानाम्बुधिविस्तृतिः ।
ज्ञानबिन्दुरतिस्तोकः, क च मे मन्दमेधसः ॥११॥ [अनुष्टुब्]

तथापि प्रेमसूरीणां, प्रकृष्टप्रेरणावशात् ।
ग्रन्थे बन्धविधानाख्ये, मौलानामष्टकर्मणां ॥१२॥ [अनुष्टु

वृत्तिं प्रदेशबन्धस्य, कर्तुमुपक्रमे मुदा ।
अतोऽत्रास्त्वञ्जसा प्रेम-प्रेरणामन्त्र इष्टदः ॥१३॥ [अनुष्टुब्]

[त्रिभिर्विशेषकम्]

इह खलु नरकतिर्यग्मर्त्यामर्त्यगतिनिबन्धनासुखसमुदयैककारणकर्मकण्टककलापाकीर्ण-कामादिकरालिकालिकदम्बककलिल-कषायकर्दमकलुषिता-ऽज्ञानान्धकाराकीर्ण-परिभ्रमन्मदमदोन्मत्त-मतङ्गजसमज--व्याप्तविषयवासनावारिवार--विस्तीर्णविसृमरविविधविपद्विषवल्लिविसराऽसारसंसार-सत्रं परिजिहीर्षुभिरलोलानाविलातुलकेवलविलासालङ्कृता-ऽधरीकृतामृतामन्दानन्दालय-सिद्धिसौधं प्रेप्सुभिर्यथाशक्ति परोपकृतौ प्रयतितव्यमिति स्याद्वादानवद्यविद्याविशालवल्लिवितानविधायिवाग्वारि-वर्षाकारि-वादिकुरङ्गसङ्गभङ्गध्येतपिङ्गसङ्काश-स्याद्वादिभिरुपदिष्टम् । तत्र परोपकारो द्रव्यभावभेदाद् द्वैविध्यं समाश्रयति । वसुवसतिवसनभोजनविश्राणनादिजनितोपकारो द्रव्योपकारः । अमन्दानन्द-हेतुसद्धर्मवितरणकृतोपकृतिर्भावोपकृतिः । तत्र तत्त्वातत्त्वविवेकविद्याविशारदा भावोपकारमेव तात्त्विकं मन्यन्ते । यतोऽशनपानवसनादिदानजनितोपकारसुखं किञ्चित्कालमेव स्थायि । द्रव्योपकारविधानेन सुखीकृतोऽपि प्राणी पुनर्दुःखभाग् भवति, दुःखनिदानविगमाभावात् । पुरुषोत्तमप्रदर्शितधर्मदानतः पारम्पर्येण दुःखबीजं दहतीति दुःखं न पुनः प्ररोढुमर्हति । जिनप्रणीतधर्मोऽपि श्रुतचारित्रभेदाद्

द्विविधः। तत्र श्रुतधर्मो गणधरादिगुम्फिताचाराङ्गादिशास्त्राध्ययनादिरूपः। चारित्रधर्मः पञ्चाश्रवविरमणं, पञ्चेन्द्रियनिग्रहः, कषायजयो दण्डत्रयविरतिश्चेति सप्तदशविधः, यद्वा क्षान्त्यादिस्वरूपः, यद्वाऽहिंसासंयमतपोलक्षणः। उभयविधधर्मे श्रुतधर्मः प्राधान्यं भजते,श्रुतज्ञानमन्तराऽङ्गीकृतचारित्रधर्मस्य निरतिचारपालनस्यासम्भवात्। तदुक्तम्—

पढमं नाणं तओ दया, एवं चिट्ठइ सव्वसंजए। अन्नाणी किं काही, किं वा नाहीइ छेअपावगं ॥१॥

श्रुतधर्मस्यानेकभेदभिन्नत्वात् श्रुतधर्मदानमपि बहुविधम्। तत्र जीवस्य दुःखं किं निमित्तकमिति प्रतिपादनपरस्य श्रुतधर्मस्य दानं शिरोमणिभावमेति। यतो विश्ववर्त्तिविश्वसत्त्वाः सुखप्रिया दुःखद्विषः, तथापि दुःखबीजज्ञानविकलास्ते यथा यथा दुःखं दूरीकर्तुं चेष्टन्ते तथा तथाऽधिकमधिकं दुःखं प्राप्नुवन्ति। तदुक्तम्—

दुःखद्विट् सुखलिप्सुर्मोहान्धत्वाददृष्टगुणदोषः। यां यां करोति चेष्टां तया तया दुःखमादत्ते ॥

दुःखस्य मौलं कारणं रागद्वेषादयः, पारम्पर्येण कर्मबन्धः। रागद्वेषादिभिः कर्मबन्धः, कर्मबन्धेन जीवा अगाधसंसारसिन्धावावर्त्तन्ते, दुःखसंहतिं च लभन्ते। तथा चाहुः **श्रीमदुमास्वातिवाचकवर्याः**—

एवं रागद्वेषौ मोहो मिथ्यात्वमविरतिश्चैव। एभिः प्रमादयोगानुगैः समादीयते कर्म ॥१॥
कर्ममयः संसारः संसारनिमित्तकं पुनर्दुःखं। तस्माद्रागद्वेषादयस्तु भवसन्ततेर्मूलम् ॥२॥

सत्येव दुःखबीजबोधे दुःखं दूरीकर्तुं शक्यते। श्रुतात् सम्यगवगते दुःखबीजे जीवास्तं सन्दह्य निरुपममनन्तमव्याबाधमाध्यात्मिकसुखस्थानं कृत्स्नकर्मक्षयजन्यं मोक्षं यान्ति। अतोऽत्र श्रुतदानेषु दुःखबीजज्ञानदानं श्रेष्ठतमम्। इत्येवमत्र रागद्वेषादिरिपुभिः कर्मेन्धनसञ्चयेन प्रवृद्धज्वालाकलापकलितोदान्तदुःखदावानलं वितन्यानिशं सन्ताप्यमानेभ्यो जीवेभ्यः स्वदुःखबीजबोधपरश्रुतधर्मदानेन परमोपकृतिर्भवति,ततस्तत्र यथाशक्ति यतनीयमिति स्वमनसि विचिन्त्य करुणापरीतचेतोभिः कर्मसाहित्यनिष्णातैः मङ्क्रमकरणप्रमुखानेकग्रन्थप्रणेतृभिः सनाथीकृतसार्धद्विशताधिकसाधुसमुदयैः सम्प्रति मरुमेदिनीं मण्डयद्भिः परमगुरुदेवैः **श्रीमद्विजयप्रेमसूरीश्वरैः** प्रेरितो ग्रन्थकारो दुःखनिचयहेतुकर्मबन्धः कथं भवति के च कर्मबन्धभेदा इत्यादिनिरूपणार्थं सान्वर्थं महाकायं बन्धविधानाभिधानं ग्रन्थं विरचितवान्। तत्रादौ "तत्थ चउविहो बंधो पयडिट्ठिइरसपएसभेएहिं" इत्यादिकासु बन्धभेदप्रभेदप्रतिपादनपरासु गाथासु प्रकृतिबन्धः स्थितिबन्धः रसबन्धः प्रदेशबन्धश्चेति बन्धस्य चातुर्विध्यं प्रदर्शितम्। पुनः प्रकृतिबन्धादिप्रत्येकविधबन्धो मूलोत्तरप्रकृतिभेदतो द्विविधः प्रदर्शितः।

अत्र पर्यन्तमनुक्रमेण मूलोत्तरप्रकृतिभेदभिन्नः प्रकृतिस्थितिरसबन्धः प्ररूपितः। साम्प्रतं 'यथोद्देशं निर्देशः' इति न्यायेन मूलप्रकृतिप्रदेशबन्धनिरूपणावसरः। प्रकृतशास्त्रस्य श्रेयःस्थानप्राप्तिहेतुत्वेन श्रेयोभूतत्वात् श्रेयोभूतत्वावच्छिन्नस्य च सम्भाव्यमानविघ्नत्वात्तदुपशमनार्थं

शिष्टाचारपरिपालनार्थं च मङ्गलं विधेयम् । अतः प्ररूपितप्रकृतिस्थितिरसबन्धः क्रमप्राप्तसकषायप्रदेशबन्धनिरूपयिषाधिकरणान्तःकरणो ग्रन्थकृदादौ प्रारिप्सितप्रदेशबन्धनिरूपणस्य निर्विघ्नसमाप्त्यर्थं मनसि कृतं प्रारब्धकार्यप्रतिबन्धकीभूतविघ्नोपशामकेष्टदेवतानमस्कारात्मकं मङ्गलं मानसिकमङ्गलस्य स्वेतरव्यक्तिदुर्बोधत्वादन्येषां मङ्गलकर्तव्यताशिक्षार्थं ग्रन्थे निबध्नाति—

**अह णिरुवममाहप्पं पणमिअ सिरिअंतरिक्खपासपहुं ।**
**वोच्छेमो सकसायं पएसबंधं गुरुपमाया ॥१॥**

(प्रे०) 'अह वोच्छेमो' इति क्रियाकारकसम्बन्धः, अथेति शब्द आनन्तर्यार्थः, रसबन्धप्रतिपादनानन्तरमित्यर्थः, 'वोच्छेमो' इति, 'वचंक् भाषणे' इति वच्धातोः भविष्यन्त्या 'मो' प्रत्ययः, "सोच्छादय इजादिषु हिलुक् च वा" [ सिद्ध० ८।३।१७२ ] इति सूत्रेण वच्धातोः 'वोच्छ' इत्यादेशः, वक्ष्याम इत्यर्थः, किं वक्ष्याम इत्याह–'पएसबंधं' इति, प्रदेशानां=कर्मपुद्गलानां बन्धः वक्ष्यमाणमिथ्यात्वादिहेतुभिरात्मना सह वह्न्ययःपिण्डवत् क्षीरनीरवद् वा सात्मीभवनं प्रदेशबन्धः, तं वक्ष्यामः, कथम्भूतं प्रदेशबन्धमित्याह–'सकसायं' इति, कषायेन सह प्रवर्तते इति सकषायः, 'सहस्तेन' [सिद्ध० ३।१।२४] इति बहुव्रीहिसमासः, "सहस्य सोऽन्यार्थे" [सिद्ध० ३।२।१४३] इति सूत्रेण सहस्य 'स' इत्यादेशः । अत्रायं भावः–प्रदेशबन्धो द्विविधः, तद्यथा-कषायप्रत्ययोऽकषायप्रत्ययश्च, तत्र मिथ्यादृष्टिगुणस्थानकादारभ्य सूक्ष्मसम्परायं यावत्कषायोदयो वर्तते एव, ततः सूक्ष्मसम्परायं यावत्प्रदेशबन्धस्य कषायोदयसहकृतत्वात्स प्रदेशबन्धः सकषायोऽभिधीयते, उपशान्तमोहगुणस्थानात् सयोगिकेवलिगुणस्थानं यावत् कषायोदयाभावः, ततस्तस्य कषायोदयासहकृतत्वात् स प्रदेशबन्धोऽकषाय इत्यभिधीयते । तथा योगस्य हान्या हीनो योगस्य वृद्ध्या चाधिकः प्रदेशबन्धो भवतीति प्रदेशबन्धे योगस्य प्राधान्यमवसीयते ।

तदुक्तं पूर्वधरश्रीमदुमास्वातिवाचकपादैः स्वनिर्मितप्रशमरतिप्रकरणे—

तत्र प्रदेशबन्धो योगात्तदनुभवनं कषायवशात् । स्थितिपाकविशेषस्तस्य भवति लेश्याविशेषेण ॥

अतः कषायसहितयोगाद् यः प्रदेशबन्धः स सकषाय इति गीयते, कषायरहितयोगाद् यः प्रदेशबन्धः सोऽकषाय इत्यभिधीयते । गुणस्थानेषु मीमांसा तु तथैव विधेया । अत्र तु सकषाय एव प्रदेशबन्धो निरूपयिष्यते, अतोऽकषायप्रदेशबन्धव्यवच्छेदनार्थमुक्तं सकषायमिति । किं विधायेत्याह–'पणमिअ' इति, प्रोपसर्गपूर्वकाद् "णमं प्रह्वत्वे" इति 'नम्' धातोः 'प्राक्काले" [सिद्ध० ५।४।४७] इति सूत्रेण 'क्त्वा' प्रत्ययः, 'क्त्वस्तुमत्तूणतुआणाः'[सिद्ध० ८।२।१४६] इति सूत्रेण क्त्वाप्रत्ययस्य 'अ' इत्यादेशः,प्रणम्येत्यर्थः, न च नत्वेत्यनेनापि सिध्यति, किं प्रकारोल्लेखेनेति वाच्यम्, प्रकारस्य मानसिकनमस्कारद्योतित्वादुपहासनमस्कारनिराकारित्वाच्च । तदुक्तं श्रीसिद्धहेमलघुन्यासादौ–

"प्रकारो मानसिकं द्योतयति, उपहासनमस्कारं च निराकरोति,
नमस्यं तत् सखि ! प्रेम घण्टारसितसोदरं । क्रमकृशिमनिःसारमारम्भगुरुडम्बरम् ॥ इत्यादिवद्" ।

अत्र प्रणम्येत्यनेन नमस्कारात्मकं मङ्गलं ज्ञापितम् । मङ्गलं हि प्रायः त्रिविधं निरूप्यते, तद्यथा-नमस्कारात्मकमाशीर्वादस्वरूपं वस्तुनिर्देशलक्षणं च । तत्राद्यं नमस्कार्यप्रतियोगिकस्वापकर्ष-बोधकस्वीयव्यापारविशेषरूपम् । द्वितीयं स्वेष्टदेवतादेः स्वाभीप्सितप्रार्थनात्मकम् । तृतीयं तु नमस्कारा-दिकं विना स्वपूज्यदेवतादिस्तुतिस्वरूपम् । नम्धातोः सकर्मकत्वात् कं प्रणम्येत्याह-''सिरिअंत-रिक्खपासपहु''' इति, श्रीअन्तरिक्षपार्श्वप्रभुम् , प्रभवतीति प्रभुः,"शंसंस्वयंविप्राद् भुवो डुः" (सिद्ध० ५।२।८४) इति भूधातोः डित् 'उ' प्रत्ययः, स्वामीत्यर्थः, स्पृशति ज्ञानेन सर्वभावानिति पार्श्वः, अथवा पार्श्वो वैयावृत्यकरो यक्षः, तस्य नाथः पार्श्वनाथः, 'ते लुग् वा" (सिद्ध० ३।२।१०८) इति सूत्रेण नाथशब्दस्य लुकि पार्श्वः, नैरुक्ताः पुनरेवमाहुः- प्रभौ गर्भस्थे जनन्या निशि शयनीयस्थयाऽन्धकारे सर्पो दृष्ट इति गर्भानुभावोऽय-मिति मत्वा पश्यतीति पार्श्वः, द्यावापृथिव्योरन्तरीक्षत इत्यन्तरिक्षम् , पृषोदरादित्वात्साधुः, गगन-मित्यर्थः, श्रयतीन्येवंशीला श्रीः, "दिद्युद्-दृद्द्-जगज्जुहू-वाक् प्राट् धी-श्री०"[सिद्ध० ५।२।८३] इति क्विप्प्रत्ययान्तो निपात्यते, पार्श्वनामा प्रभुः पार्श्वप्रभुः, "मयूरव्यंसकेत्यादयः" (सिद्ध० ३।१।११६) इति मध्यमपदलोपिसमासः, अन्तरिक्षे स्थितः पार्श्वप्रभुः अन्तरिक्षपार्श्वप्रभुः, श्रियाऽष्टमहाप्रा-तिहार्यलक्षणया युक्तोऽन्तरिक्षपार्श्वप्रभुः=श्रीअन्तरिक्षपार्श्वप्रभुः,जिनेश्वराणामष्टमहाप्रातिहार्याणीत्थम्—

अशोकवृक्षः सुरपुष्पवृष्टिर्दिव्यध्वनिश्चामरमासनं च भामण्डलं दुन्दुभिरातपत्रं सत्प्रातिहार्याणि जिनेश्वराणाम् ।

यद्वा चतुस्त्रिंशदतिशयरूपया श्रिया युक्तः, देवाधिदेवानां चतुस्त्रिंशदतिशया एवम्—

[1]तेषां च देहोऽद्भुतरूपगन्धो, निरामयः स्वेदमलोज्झितश्च ।
[2]श्वासोऽब्जगन्धो [3]रुधिरामिषं तु, गोक्षीरधाराधवलं ह्यविस्रम् ॥१॥
[4]आहारनीहारविधिस्त्वदृश्य-श्चत्वार एतेऽतिशयाः सहोत्थाः ।
[1]क्षेत्रे स्थितिर्योजनमात्रकेऽपि, नृदेवतिर्यग्जनकोटिकोटेः ॥२॥
[2]वाणी नृतिर्यक्सुरलोकभाषा, संवादिनी योजनगामिनी च ।
[3]भामण्डलं चारु च मौलिपृष्ठे, विडम्बिताहर्पतिमण्डलश्रि ॥३॥
साग्रे च गव्यूतिशतद्वये [4]रुजा,[5]वैरेतयो[6] [7]मार्यतिवृष्ट्य[8]वृष्टयः[9] ।
[10]दुर्भिक्षमन्यस्वकचक्रतो [11]भयं, स्यान्नैत एकादश कर्मघातजाः ॥४॥
[1]खे धर्मचक्रं [2]चमराः [3]सपाद-पीठं मृगेन्द्रासनमुज्ज्वलं च ।
[4]छत्रत्रयं [5]रत्नमयो ध्वजोऽङ्घ्रि-न्यासे च [6]चामीकरपङ्कजानि [6] ॥५॥
[7]वप्रत्रयं चारु [8]चतुर्मुखाङ्गता, [9]चैत्यद्रुमोऽधोवदनाश्च कण्टकाः[10]।
[11]द्रुमानतिर्दुन्दुभिनाद[12] उच्चकै-र्वातोऽनुकूलः[13] शकुनाः प्रदक्षिणाः[14]॥६॥
[15]गन्धाम्बुवर्षं [16]बहुवर्णपुष्प-वृष्टिः [17]कचश्मश्रुनखाप्रवृद्धिः ।
[18]चतुर्विधामर्त्यनिकायकोटि-र्जघन्यभावादपि पार्श्वदेशे ॥७॥
[19]ऋतूनामिन्द्रियार्थाना-मनुकूलत्वमित्यमी ।
एकोनविंशतिर्दैव्या-श्चतुस्त्रिंशच्च मीलिताः ॥८॥

नतु श्रीपार्श्वप्रभोरन्तरिक्षस्थितत्वं कथमिति चेद्, मा त्वरिष्ठाः, पार्श्वप्रभोरन्तरिक्षस्थानोदन्त इहैवावस्ताद् वक्ष्यामः। किंविशिष्टं श्रीअन्तरिक्षपार्श्वप्रभुमित्याह–'णिरुवममाहप्पं' इति, निरुपममाहात्म्यम्, निर्गतोपमा यस्माद् तन्निरुपमम्, "प्रात्यवपरिनिरादयो गत-क्रान्त-क्रुष्ट-ग्लान-क्रान्ताद्यर्थाः प्रथमाद्यन्तैः" [सिद्ध० ।३।१।४७] इति प्रादिबहुव्रीहिसमासः, महांश्चासावात्मा चेति महात्मा, "सन्महत्परमोत्तमोत्कृष्टं पूजायाम्" [सिद्ध. ।३।१।१०७] इति कर्मधारयसमासः, महात्मनो भावः=माहात्म्यम्, भावे 'ट्यण्' प्रत्ययः, महिमेत्यर्थः, निरुपमं माहात्म्यं यस्यासौ निरुपममाहात्म्यः, तं निरुपममाहात्म्यम्, अतुलप्रभावमित्यर्थः, श्रीमदन्तरिक्षपार्श्वप्रभोर्निरुपममाहात्म्यमिहैवावस्ताद् वक्ष्यामः। ननु यदि श्रीमदन्तरिक्षपार्श्वप्रभुर्निरुपममाहात्म्यस्तर्हि कथं कल्पतरुकामकुम्भादिभिरुपमीयते ? इति चेद्, प्रतिविधीयते, परमार्थतः श्रीमदन्तरिक्षपार्श्वनाथो निरुपममाहात्म्य एव, तथापि "अरुन्धतीदर्शनन्यायेन" बालजनानामनवगतभगवन्माहात्म्यानां पारमार्थिकभगवन्माहात्म्यबोधाय पूर्वर्षिभिः कल्पतरुकामकुम्भादिनोपमीयते। बालजना लोकतः कामधेनुकामकुम्भादीनां प्रभावमवगच्छन्ति, पार्श्वप्रभोर्माहात्म्यं च न जानते, अतस्तैरुपमिते भगवति बालजना बहुमानपुरस्सरं भगवद्दर्शनपूजनादिषु प्रवर्तन्ते, गते च काले ते परमार्थतो भगवन्तं निरुपममाहात्म्यत्वेनावगच्छन्ति, इति निरुपमोऽपि भगवान् बालजनोपकाराय कामघटादिनोपमीयते। अथवा तत्त्वदृष्ट्या निरुपममाहात्म्योऽपि भगवान् वनेचरदृष्टान्तेनानुमीयते-यथा विपरीतशिक्षिततुरङ्गमापहृतो नरवाहनाभिधो भूपतिर्विपिने पतितः, तत्र क्षुत्तृडादिभिः पीडितः केनचिद् वनेचरेण शीतलविमलजलमधुरमञ्जुलफलादिदानेन सन्तोषितः। ततः स्वसेनायां संप्राप्तायां राज्ञा स वनेचर स्वेन साकं स्वकीयनगरे समानीतः, स्वावाससमसौधे च स्थापितः। तत्र कौशेयकांशुकतुरगमोदकादिनानावस्तुदानेन भृशमावर्जितः। कियद्वर्षानन्तरं स्वकुटुम्बे स्मृतिपथमागते स मीलनार्थमेकाक्येव वने गतः। स्वावासं गतः स मीलितानां स्वजनानामभ्यर्णे स्वभोजनादिवृत्तान्तं निवेदयति। तदानीमश्वादि कीदृशमासीदिति स्वजनैः पृष्टः स उपमानाभावादेवमवोचत्– वाजिनो हि हरिणरोझसन्निभाः, कपित्थबिल्वफलाभा मोदकाः, गिरिकन्दरासङ्काशा आवासाः, भूर्जपत्रसमानानि दुकूलानि, तालपत्रसवर्णानि सुवर्णरत्नाभरणानि, कपर्दिकाहारप्रख्यानि कर्णसुवर्णकुण्डलानि, हारार्धहारादीनि गुञ्जाफलहारनीकाशानि। इत्येवं पुलिन्दबुद्धिवद् भगवदुपमानानि ज्ञेयानि धीधनैः। ननु ह्रसद्बुद्धिबलजीवितकालादिदुःषमारेऽस्मिन् भवतेदृशं निरूपणसामर्थ्यं कथं प्राप्तमिति जिज्ञासायां स्वगुरौ बहुमानं प्रदर्शयन् स्वौद्धत्यं च परिहरन्नाह–'गुरुपसाया' इति, प्रसादः कृपा, गुरोः प्रसादाद् गुरुप्रसादात्, "गम्ययपः कर्माधारे" [सिद्ध. २।२।७४] इति पञ्चमी विभक्तिः, गुरुकृपां प्राप्येत्यर्थः। गुरुप्रसादो गुरुविनयाधीन इति ग्रन्थकृताऽत्र ग्रन्थनिरूपणशक्तौ गुरुप्रसादहेतुप्रदर्शनेन मोक्षमार्गसाधनायां गुरुविनयस्य प्राधान्यं ज्ञापितम्। जिनशास्त्रेषु गुरुविनयः गुणकामकुम्भस्याविघमाकर्षणम्, श्रेयोलक्ष्म्या अतन्त्रं वशीकरणम्, मुक्तिसुन्दर्या अमूलं कार्मणम्, गुरुकृपा-

सम्यक्त्वा अनुच्चाटनं संवननम्, केवलज्ञानकमलाया अमन्त्रं मूलकर्म, सर्वश्रेयसामद्वितीयं भाजनं प्रदर्शितः। तथाहि—गुरुविनयेनानुपमासीमगुरुप्रसादः, गुरुप्रसादाद् विपुलविमलश्रुतज्ञानावाप्तिः, श्रुतज्ञानाद् निरतिचारचित्रपवित्रचरित्रप्राप्तिः, चारित्रेण नैकदुःखनिबन्धनसंसारपारावारावर्तहेतु-कर्माश्रवनिवृत्तिः, आश्रवविरमणात् संवरः, संवरेण कर्मेन्धनकलापकृशानुकल्पबाह्याभ्यन्तरभेद-भिन्नतपःसामर्थ्यं प्रकटीभवति, तपस आत्मप्रदेशेभ्य उपभुक्तविपाकानां कर्मपुद्गलानां परि-शटनरूपा निर्जरा भवति, निर्जरासकाशादशेषक्रियानिरोधः, क्रियानिरोधादयोग्यवस्था लभ्यते, ततश्च नित्यमभयं मोक्षसुखमाविर्भवति, इत्येवं विनयः सर्वकल्याणानां मूलम्, तदुक्तम् 'उत्कृष्टेऽ-नूपेन' (२।२।३९।) इति सिद्धहेमव्याकरणसूत्रस्य वृत्तौ सङ्गृहीतृशिरोमणित्वेन दृष्टान्तीभूतैः पूर्वधरश्रीमदुमास्वातिवाचकपादैः स्वनिर्मितप्रशमरतिप्रकरणे—

विनयफलं शुश्रूषा गुरुशुश्रूषाफलं श्रुतज्ञानम्।
ज्ञानस्य फलं विरतिर्विरतिफलं चाश्रवनिरोधः ॥७२॥
संवरफलं तपोबलमथ तपसो निर्जराफलं दृष्टम्।
तस्मात् क्रियानिवृत्तिः क्रियानिवृत्तेरयोगित्वम् ।७३।
योगनिरोधाद् भवसन्ततिक्षयः सन्ततिक्षयान्मोक्षः।
तस्मात् कल्याणानां सर्वेषां भाजनं विनयः ॥७४॥

अपरं च—

शास्त्रागमादृते न हितमस्ति न च शास्त्रमस्ति विनयमृते।
तस्माच्छास्त्रागमलिप्सुना विनीतेन भवितव्यम् ॥६६॥
कुलरूपवचनयौवनधनमित्रैश्वर्यसंपदपि पुंसाम्।
विनयप्रशमविहीना न शोभते निर्जलेव नदी ॥६७॥
न तथा सुमहार्घ्यैरपि वस्त्राभरणैरलङ्कृतो भाति।
श्रुतशीलमूलनिकषो विनीतविनयो यथा भाति ॥६८॥

तथा गुरुप्रसादोल्लेखेन श्रेयःकार्ये यथा स्वेष्टदेवतास्मरणादि विधेयं तथा स्वगुरुपादानामपि स्मरणादि कर्तव्यमित्यपि सूचितमिति ध्येयं शेमुषीशालिभिः। निरुपममाहात्म्यं श्रीअन्तरिक्षपार्श्वप्रभुं प्रणम्य गुरुप्रसादात् सकषायं प्रदेशबन्धं वक्ष्याम इत्यन्वयः।

अथात्र मङ्गलगाथायां नमस्कारे चतुस्त्रिंशदतिशयसङ्ग्राहकातिशयचतुष्टयमध्ये कः केन पदेन सूच्यत इत्यभिधीयते—

"**णिरुवममाहप्पं**"इत्यनेन पूजातिशयः प्रदर्शितः, अत एव महांश्चासावात्मा इति महात्मेति "सन्महत्परमोत्तमोत्कृष्टं पूजायाम्" (सिद्ध० ३।१।१०७) इत्यनेन पूजायां समासः, "**सिरिअंतरिक्खपासपहुं**"इत्यनेन वचनातिशयः सूचितः, "श्रिया पञ्चत्रिंशद्वाग्गुणलक्षणया युक्तः"इति व्युत्पत्तिकरणात्, वचनातिशयश्च न ज्ञानातिशयं विना सम्भवतीति वचनातिशयेन ज्ञानातिशय आक्षिप्यते, ज्ञानातिशयश्चापायापगमातिशयं विना न भवितुमर्हतीति तेनापायापगमातिशयाक्षेपः क्रियते।

अथात्र कश्चित्प्रश्नचञ्चुः प्रकाशते—ननु मङ्गलं शास्त्राद् भिन्नमाहोस्विदभिन्नम् ? भिन्नमिति चेत् ,शास्त्रस्यामङ्गलत्वापत्तिः, मङ्गलभिन्नत्वात् , यच्च स्वरूपतोऽमङ्गलं तदन्यमङ्गलकदम्बकेनाऽपि मङ्गलीकर्तुं न शक्यते, स्वभावस्य व्यावर्तयितुमशक्यत्वात् , नहि खलु काचः स्वरूपेणावैडूर्यमणिः सन् केनापि कथमपि वैडूर्यमणीक्रियते, अतो मङ्गलोपन्यासो व्यर्थः, स्वकार्याकरणात् , तथापि मङ्गलोपादाने आग्रहश्चेदनवस्थाप्रसङ्गो दुर्वारः, तथाहि– यथा प्रागमङ्गलस्य सतः शास्त्रस्य मङ्गलमुक्तं तथैव मङ्गलान्तरमपि वक्तव्यम् , आद्यमङ्गलाभिधानेऽपि तदमङ्गलत्वात् , एवं मङ्गलान्तराभिधानेऽप्यन्यन्मङ्गलमभिधातव्यम् , न्यायस्य तुल्यत्वात् , इत्थं पुनरपि मङ्गलं वक्तव्यमिति समापतन्त्यनवस्था केन निवार्यते ? अथाभिन्नमिति पक्षस्तदा शास्त्रस्यैव मङ्गलत्वादन्यमङ्गलोपादानं निरर्थकमेव, अमङ्गले हि मङ्गलमुपादीयते, यच्च स्वत एव मङ्गलं तत्र किं मङ्गलविधानेन ? नहि शुक्लं शुक्लीक्रियते, नापि स्निग्धं स्नेह्यते, अथ यदि मङ्गलभूतस्याप्यन्यमङ्गलमुपादीयते तर्हि तस्याप्यन्यमङ्गलमुपादेयम्,मङ्गलरूपत्वाऽविशेषात् , पुनस्तस्यापि मङ्गलान्तरमुपादेयमित्यनवस्थापत्तिः ,

अत्र प्रतिविधीयते–प्रथमपक्षस्तावदङ्गीक्रियते, अतो न तत्रोक्तदोषावकाशः, यदि वा 'तुष्यन्तु दुर्जनाः' इति न्यायेन स्वीकृतेऽपि तस्मिन् न प्रागुक्तदोषप्रसङ्गः, यतोऽस्मिन् जगति द्रव्याणि द्विविधानि, तद्यथा–भावुकानि अभावुकानि च, तत्र यानि द्रव्याण्यन्यद्रव्येण स्वरूपतया परिणामयितुं शक्यन्ते तानि भावुकानि,यथाऽऽम्रशाली, स हि निम्बनगसंसर्गेण निम्बत्वं याति । एवं पुष्पैः सह स्थितास्तिलास्तद्गन्धवासिता भवन्ति । तदुक्तम्—

"अंबस्स य निंबस्स य दोण्हं पि समागयाइं मूलाइं । संसग्गीए विणट्ठो अंबो निंबत्तणं पत्तो ॥१॥ कुसुमेहिं सह वसंता तिलावि तग्गंधिया हुंति।

यानि द्रव्याणि परद्रव्येण स्वभावतया परिणामयितुं न शक्यन्ते तान्यभावुकानि, यथा वैडूर्यमणिः, स हि चिरकालं यावत् काचयुक्तोऽपि स्वकीयप्राधान्यगुणेन काचभावं नैति । तदुक्तम्–

भावुग अभावुगाणि अ लोए दुविहाणि होंति दव्वाणि । वेरुलिओ तत्थ मणी अभावुगो अन्नदव्वेहिं ॥१॥
सुचिरंपि अच्छमाणो वेरुलिओ कायमणिअ उम्मीसो । न उवेइ कायभावं पाहण्णगुणेण निअएणं ॥२॥

परं शास्त्राणि तु भावुकानि, ततस्तानि स्वरूपेणामङ्गलान्यपि मङ्गलेन स्वरूपतया परिणम्यन्ते, लवणप्रदीपादिवन्मङ्गलस्य स्वपरतद्रूपताऽऽपादने समर्थत्वात् , यथा हि प्रदीपः स्वपरप्रकाशनसमर्थत्वात् स्वं परं च प्रकाशयति, एवं यथा लवणं स्वपरलवणिमस्वभावाऽऽपादने समर्थतया स्वं परं च लवणयति, एवं मङ्गलमपि स्वपरमङ्गलकरणसमर्थत्वात् स्वं परं च मङ्गलयतीति प्रथमपक्षाभ्युपगमेऽपि न कश्चिद् दोषोऽवतिष्ठते । परमार्थस्तु शास्त्रं मङ्गलमेव ।

द्वितीयपक्षेऽपि न मङ्गलोपादानानर्थक्यम् ,शिष्यशेमुषीमङ्गलपरिग्रहाय शास्त्रस्यैव मङ्गलत्वानुवादात् । अयं भावः–कथं तु नाम शिष्यो मङ्गलमिदं शास्त्रमित्येवं गृह्णीयादिति मङ्गलोपन्यासेन मङ्गलमिदं शास्त्रमनूद्यते । शास्त्रं स्वतो मङ्गलरूपत्वात् शिष्यो मङ्गलमिदं शास्त्रमित्येवं न

गृह्णीयात् तथापि स्वकार्यसाधनाय शक्तमेव, तस्य तथास्वभावत्वात्, तत्कथमन्यमङ्गलोपादानं निरर्थकं नेति चेद्, न, वस्तुतत्त्वपरिज्ञानविरहात्, विश्वेऽस्मिन् वस्तूनां शक्तयो विचित्राः, किञ्चिद् वस्तु तथास्वरूपेण गृह्यमाणं स्वकार्यप्रसाधनाय प्रभु, यथा मणिः, मणिर्हि मणिरूपतया गृह्यमाणः स्वफलप्रदानसमर्थः, न काचशकलतया, किञ्चिद् वस्तु स्वरूपेणागृह्यमाणमपि स्वकार्यं प्रसाधयति, यथा विषम्, तद्धि तथास्वरूपेणाज्ञातमपि भुक्तं सत् पञ्चत्वं प्रापयति, परं शास्त्रं तु मङ्गलं सदपि मङ्गलबुद्ध्या परिगृह्यमाणमेव मङ्गलफलसाधनाय प्रभविष्णु, साधुवत्, साधुर्हि स्वयं मङ्गलभूतोऽपि तद्बुद्ध्या गृह्यमाण एव प्रशस्तचेतोवृत्तेर्भव्यस्य मङ्गलकार्यं प्रसाधयति, अमङ्गलबुद्ध्या गृह्यमाणं शास्त्रं तु मङ्गलभूतमपि स्वकार्यं न करोति, यथा मङ्गलभूतोऽपि साधुः कालुष्योपहतचित्तवृत्तेरभव्यस्य मङ्गलकार्यं न विदधाति। नन्वेवं सति भवन्मते मनःसङ्कल्पप्रामाण्यादमङ्गलमपि वस्तु मङ्गलमत्या परिगृह्यमाणं मङ्गलकार्यं करिष्यति, न्यायस्य साम्यात्, न चैतत् क्वापि दृष्टम्, धन्यवादार्हः खलु त्वदीयवचनविलास इति, अत्रैवं प्रतिवचः, स्वरूपेण मङ्गलं सत् वस्तु मङ्गलमत्या परिगृह्यमाणं तत्कार्यायालम्, न पुनरमङ्गलं वस्तु, अमङ्गलं वस्तु तु स्वभावेनामङ्गलभूतत्वात् मङ्गलमत्या परिगृह्यमाणमपि मङ्गलकार्यं न विदधाति, लोकप्रसिद्धमेवेदम्, तथाहि– यदि कश्चित् सुवर्णं सुवर्णतया परिगृह्य प्रवर्तते तर्हि दरिद्रताविनाशादि तत्फलमासादयति, न पुनरसुवर्णं सुवर्णतया परिगृह्य प्रवर्तमानस्तत्फलमासादयति।

पुनरपि पर्यनुयोगचणो विनेयः प्रकाशते–ननु शास्त्रस्य कथं मङ्गलता? प्रतिविधीयते, निर्जरार्थत्वात्, तदपि कथमिति चेद्, शास्त्रस्य ज्ञानरूपत्वाद्, ज्ञानस्य च कर्मनिर्जराप्रबलहेतुत्वं सिद्धमेव। तदुक्तं–"जं अन्नाणी कम्मं खवेइ बहुयाइ वासकोडीहिं। तन्नाणी तिहि गुत्तो खवेइ ऊसासमेत्तेणं॥"
इत्यलमतिविस्तरेण। यद्यप्यत्र बहुवक्तव्यमवशिष्यते, तथापि ग्रन्थविस्तरभयादन्यत्र भगवत्तीर्थकरप्रवचनावितथतत्त्वप्रबोधप्रकटितप्रवरप्रज्ञाप्रकाशतिरस्कृतपरतीर्थिकचक्रप्रवादध्वान्तप्रचारैः हरिभद्रादिसूरिभिः प्रपञ्चितत्वान्चास्मल्लेखिनी नाग्रे सञ्चाल्यते।

अत्र कर्तॄणां श्रोतॄणां चाविघ्नेन स्वेष्टफलप्राप्त्यर्थं यथा मङ्गलं वक्तव्यं तथैव प्रेक्षावतामिह प्रवृत्त्यर्थं प्रयोजनादिकमपि वक्तव्यम्, अन्यथा निष्प्रयोजनत्वात् कण्टकशाखामर्दनवत्, निरभिधेयत्वाद् ग्रहिलप्रलापवद्, असम्बद्धत्वात् दशदाडिमानि षडपूपा इत्यादिवाक्यकदम्बकवत् वेत्यादिशङ्कातः प्रेक्षावन्तो न प्रवर्तेरन्, तदुक्तम्–

प्रेक्षावतां प्रवृत्त्यर्थं फलादित्रितयं स्फुटम्। मङ्गलं चैव शास्त्रादौ वाच्यमिष्टार्थसिद्धये॥१॥

अतः प्रयोजनादि प्रदर्श्यते–प्रकरणकर्तृश्रोत्रपेक्षया प्रयोजनं द्विविधम्, तदपि पुनरनन्तरपरम्परभेदाद् द्विधा, तत्र प्रकरणकर्तुरनन्तरं प्रयोजनं सत्त्वानुग्रहः, श्रोतुश्च प्रकरणार्थपरिज्ञानम्, परम्परं तु द्वयोरपि निर्वाणावाप्तिः, यद्यपीदमिह साक्षान्नोक्तं तथापि सामर्थ्यादवसीयते, तथाहि– सत्त्वानुग्रहप्रवृत्ता एव मुनिमतल्लिका इदमुपदिशन्ति, तदनुग्रहेण चानुक्रमेण परमपदप्राप्तिरिति वीतरागक्रमकमलकिञ्जल्कचञ्चरीकाणां सुप्रतीतमेव, उक्तं च–

सर्वज्ञोक्तोपदेशेन यः सत्त्वानामनुग्रहम्। करोति दुःखतप्तानां स प्राप्नोत्यचिराच्छिवम्॥

श्रोताऽपि गुरुभ्यः प्रस्तुतप्रकरणार्थं विजानाति,परिज्ञाते च कर्मबन्धे ततः सम्यग् विरम्य निरति-चारचारित्रं परिपाल्याऽतिदुष्करतपश्चरणं विधाय शुक्लध्यानधनञ्जयेन घातिकर्मेन्धनकदम्बकं भस्मी-कृत्य सकलकर्मविच्छेदकारिशैलेशीकरणं प्रविश्य निःश्रेयसपदमधिगच्छति। अथ सम्बन्धो दर्श्यते-संबन्धो द्विधा,उपायोपेयभावलक्षणो गुरुपर्वक्रमलक्षणश्च,तत्राद्यस्तर्कानुसारिणः प्रति,तद्यथा—वचनरूपापन्नं प्रकरणमुपायः तत्परिज्ञानं चोपेयम्, द्वितीयस्तु श्रद्धानुसारिणः प्रति।

अथ श्रीमदन्तरिक्षपार्श्वप्रभोरन्तरिक्षस्थितिप्रबन्धः प्रदर्श्यते,-किलैकदा रावणराजा स्वकार्यार्थं मालि-सुमालिनौ क्वापि प्रेषितवान्। स्वविमानेन गच्छन्तौ तौ तीर्थकरप्रतिमां विस्मृतवन्तौ। तौ जिनार्चनमन्तरा न भोक्तव्यमिति विपत्तिव्रातविनाशिपवित्रप्रतिज्ञाप्रियापरीतौ स्तः स्म,अतस्तद्रक्षणाय मध्येमार्गं भोजन-काले सञ्जाते रम्यावदातसिकताभिः पार्श्वप्रभोर्भवभञ्जकभव्याभिनवमूर्तिं निर्माय पूजयामासतुः। ततस्तां प्रतिमामन्तःसरः स्थापितवन्तौ। दिव्यानुभावात् सा तत्र स्थिरीबभूव। ततः प्रभृति सरोजलं विमलतां लेभे, क्षीणतां च न प्राप जातुचिदपि, परमपूज्यपार्श्वप्रभुपादपवित्रपरिचर्यापीयूषपानादिव। तदानीं विङ्गिलपुरे श्रीपालभूपालं दैवस्तदीयश्रीकृतसौख्योत्कर्षमसहमान इव कुष्ठरोगेन सर्वाङ्गेषु पीडितं चकार। आयुर्वेदविद्याविचक्षणागदङ्कारा विविधभेषजैस्तत्प्रतिकारं चक्रुस्तथापि सफलतां नेयुः। अन्यदा स पृथ्वीपतिस्तस्मिन् सरसि लीलार्थमगमत्। तत्र तृषार्तः सन् तत्पयाकरीयममृत-मिव निर्मलं जलं पीत्वा क्षणं स्वस्थोऽभवत्,ततो मुखप्रमुखावयवान् प्रक्षाल्य स्वगृहं ययौ। प्रक्षालि-तास्ते सर्वेऽवयवा रैरोचिषो बभुवुः। अन्येद्युः प्रातः पृथिवीशं कलधौतकान्तिं वीक्ष्य किमेतदिति कौतुकपरीतमानसी राज्ञी प्रतिकृतिरिव क्षणं निश्चलतां गता। ततो भूपतिं वृत्तान्तं प्रपच्छ सा। नरेशोऽपि क्रीडार्थगमनप्रक्षालनादिकं सर्वोदन्तमाह स्म। कोऽप्यत्रातिशयोऽस्तीति ज्ञात्वा भूभृदपि विस्मितो बभूव।

पुनर्गत्वा तस्मिन् तडागे स्नाने कृते स्पृष्टपार्श्वप्रभुशरीरस्य सलिलस्य स्पर्शमसहमान इव कुष्ठरोगो नष्टः। ततो नैवेद्यबलिधूपादि विधाय "अत्रास्ति दैवतं यत्तत् प्रकटीभवतु" इति जुघोष। तस्यां रजन्यां च तत्रैव सुष्वाप सः। ब्राह्ममुहूर्तेऽधिष्ठाता देवः स्वप्ने तमेवमवोचत्—भो भूपाल! भाविनः श्रीपार्श्वनाथस्यात्र प्रतिमा विद्यते, यत्प्रभावात् त्वदङ्गोत्थः कुष्ठरोगः क्षीणः। त्वमेनं जिनबिम्बं शकटे संस्थाप्य सप्तवासरजाततर्णकौ नियोज्य स्वयं सारथीभूय शकटं चालय। यत्र त्वं मुखं परावृत्य पृष्ठतो द्रक्ष्यसि तत्रैषा मूर्तिः स्थास्यतीत्युक्त्वा देवो गतः। इतो भूभृदपि प्रबुध्य प्रातः सञ्जाते मुराज्ञां सर्वामपि सम्पादितवान्। पार्श्वप्रभुप्रतिमाऽलङ्कृतशकटं चालयन् क्षितीशः किञ्चिद् व्यतिक्रान्ते भूभागे प्रतिमाऽऽयाति उत नेति शङ्कितः सन् सिंहावलोकनं कृतवानिति प्रतिमा दिव्यानुभावतोऽन्तरिक्षे स्थिता, शकटस्त्वग्रे चचाल। एवं चमत्कारं दृष्ट्वा राजाऽऽश्चर्या-मायाब्धौ निमग्नः। तत्र श्रीपुरमिव श्रीपुरसिद्धं भव्यनव्यनगरं निर्माप्य पार्श्वप्रभुप्रतिमाया उपरि श्रेयस्कं चन्द्रस्वच्छमलङ्कृतशिखरं मञ्जुलमन्दिरमचीकरत्। पुरा नारी गर्गरिकायुक्तौ घटौ स्व-

मस्तके न्यस्य तद्बिम्बस्याधस्तात् प्रयायात् तावदन्तरं भूमिप्रतिमयोरासीत् । कालप्रभावात् क्रमशो ह्रासं गच्छत्तदन्तरमिदानीं किञ्चिदेवावस्थितमिति श्रीमदन्तरिक्षपार्श्वप्रभुचरणारविन्दकिञ्जल्के चञ्चरीकायमाणा जनता वदति ॥१॥ अथात्र निरूपयिष्यमाणमधिकारचतुष्कं प्रतिपिपादयिषुराह—

**अहिगारा मूलपयडिपएसबंधम्मि अत्थि चत्तारो ।**
**पढमो भूओगारो पयणिक्खेवो तहा वड्ढी ॥२॥**

(प्रे०) 'अहिगारा' इत्यादि, मूलानां ज्ञानावरणदर्शनावरणवेदनीयमोहनीयायुष्कनाम-गोत्रान्तरायलक्षणानामष्टप्रकृतीनां प्रदेशबन्धे–प्रदेशबन्धविषयकनिरूपणे चत्वारोऽधिकाराः सन्ति । तद्यथा–[1]प्रथमो दलविभाजनादिषोडशद्वारात्मकः, [2]भूयस्कारः, [3]पदनिक्षेपो [4] वृद्धिश्च, मूले 'वड्ढी' इत्यत्र 'बन्धः' इति गम्यते, चतुर्थाधिकारप्रारम्भे "णेयाणि वड्ढिबंधे" इत्यत्र चतुर्थाधिकारस्य वृद्धि-बन्धाभिधानेनोक्तत्वात् ।

(१) अत्र प्रथमाधिकारस्य विशिष्टं किमपि नाम न दत्तमिति स प्रथमाधिकारशब्देनैव वक्तव्यः । तत्र प्रथमाधिकारे 'णेयाइं दल' इत्यादिना षोडशद्वाराणि यथाक्रमं स्वयं तदधिकारप्रारम्भे वक्ष्यतीति तानि नेह प्रपञ्च्यन्ते ।

(२) द्वितीयो भूयस्काराधिकारोऽपि दलविभाजनं, स्थानं, साद्यादि सन्निकर्षश्चेति चत्वारि द्वाराणि विहाय शेषैः प्रथमाधिकारोक्तैर्द्वादशद्वारैः सत्पदद्वारेण चेति त्रयोदशद्वारैः चिन्तयिष्यते । तानि भूयस्काराधिकारे "दुइए भूओगारे" इत्यादिप्रारम्भिकगाथाद्विके नामग्राहं स्वयं वक्ष्यति । भूयस्काराधिकारे सत्पदादीनि त्रयोदशापि द्वाराणि ज्ञानावरणीयाद्यष्टकर्मणां भूयस्कारः, अल्पतरः, अवस्थितोऽवक्तव्यश्चेति चतुर्विधप्रदेशबन्धमाश्रित्य प्रतिपादयिष्यन्ते । द्वितीयाधिकारीयसत्पदद्वारस्य "अट्ठण्हं कम्माणं अत्थि पएसस्स चउविहो बन्धो । भूगारो अप्पयरो अवट्ठिओ तह अवत्तव्वो" इत्याद्य-गाथायां भूयस्कारादिचतुष्पदेषु भूयस्कारपदस्य प्रथमत्वाद् द्वितीयोऽधिकारो भूयस्कारशब्देन गीयते ।

(३) तृतीयः पदनिक्षेपाधिकारः सत्पदस्वामित्वाल्पबहुत्वानीति त्रिद्वारैः प्ररूपयिष्यते । एतच्च पदनिक्षेपाधिकारीयप्रथमगाथायां 'तइए पयणिक्खेवे' इत्यादिना दर्शयिष्यति । तत्र सत्पदादीनि त्रीण्यपि द्वाराणि जघन्योत्कृष्टभेदभिन्नां ज्ञानावरणीयाद्यष्टकर्मणां प्रदेशबन्धस्य वृद्धिं हानिं च, तथा जघन्योत्कृष्टभेदभिन्नमवस्थितप्रदेशबन्धमाश्रित्य चिन्तयिष्यन्ते ।

(४) चतुर्थे वृद्धिसंज्ञकाधिकारे भूयस्काराधिकारोक्तानि त्रयोदशद्वाराणि ज्ञानावरणीयाद्यष्टकर्म-प्रदेशबन्धस्यासंख्यातभागा, संख्यातभागा, संख्यातगुणाऽसंख्यातगुणा चेति चतुर्विधां वृद्धिं चतुर्विधां हानिमवस्थितप्रदेशबन्धमवक्तव्यप्रदेशबन्धं चेति दशपदान्यधिकृत्य प्रतिपादयिष्यन्ते । इत्येवं समा-सेन ग्रन्थनिरूपणविषयाः प्रदर्शिताः, व्यासतस्तु तत्तदधिकारे द्वारगाथासु व्यक्तीभविष्यन्ति ॥२॥

तदेवं प्रतिपादितं मूलप्रकृतिप्रदेशबन्धेऽधिकृताधिकारचतुष्टयम् । अथ ते चत्वारोऽधिकाराः प्रत्येकं नानाद्वारनिष्पन्ना इत्यतस्तत्तदधिकारगतद्वाराणि नामतस्तत्तदधिकारप्रारम्भ एव विवक्षुरत्र तानि सङ्ख्यामात्रेण प्राह—

तेसुं पढमाईसुं अहिगारेसु चउसुं जहाकमसो ।
हुन्ते सोलस तेरस तिण्णि य तेरस दुआराणि ॥३॥

(प्रे०) 'तेसु' इत्यादि, तेष्वनन्तरगाथोक्तेषु प्रथमादिषु वृद्ध्यन्तेषु चतुर्ष्वधिकारेषु यथाक्रमं 'सोलस तेरस तिण्णि य तेरस' त्ति षोडश, त्रयोदश, त्रीणि त्रयोदश च'दुआराणि' त्ति अभिधास्यमानाभिधानान्यनुयोगद्वाराणि'हुन्ति'त्ति भवन्तीति गतार्थम् । नामतः प्रतिद्वारव्याख्यानं तु तत्तदधिकारप्रारम्भे द्वारगाथावृत्तौ विधास्यत इति ॥३॥

॥ ॐ ह्रीं अर्हं नमः ॥

# ॥ प्रथमाधिकारः ॥

साम्प्रतं गाथाद्विकेन प्रथमाधिकारे चिन्तयिष्यमाणानि द्वाराणि नामग्राहमाह—

तह आइमअहिगारे णेयाइं दलविभाजणं[1] ठाणं[2] ।

सामित्त[3]साइआई[4] काल[5]ंतर[6]-सण्णियासा[7] य ॥४॥

भंगविचयो[8] य भागो[9] परिमाणं[10] खेत्त[11]-फोसणा[12] कालो[13] ।

अंतर[14]-भाव[15]-ऽप्पबहू[16] सोलस दाराणि जहकमसो ॥५॥

(प्रे०) 'तह' इत्यादि, तत्र प्रथमाधिकारे यथाक्रमं षोडश द्वाराणि ज्ञातव्यानीति क्रियाकारकसम्पर्कः । ननु कानि षोडश द्वाराणीत्याह–'दलविभाजणं' इत्यादि, [1]दलविभाजनम्, स्थानम्, [3]स्वामित्वम्, [4]साद्यादि, [5]कालः, [6]अन्तरम्, [7]सन्निकर्षः, [8]भङ्गविचयः, [9]भागः, [10]परिमाणम् [11]क्षेत्रम् [12]स्पर्शना, [13]कालः, [14]अन्तरम्, [15]भावो-[16]ऽल्पबहुत्वं चेति षोडश द्वाराणि यथाक्रमं प्रथमाधिकारे निरूपयिष्यन्ते । अथाऽनुक्रमेण द्वारविषयाः प्रदर्श्यन्ते–

(१) दलानां विभाजनं दलविभाजनम्, कर्मप्रदेशानां विभाग इत्यर्थः । विवक्षितैकसमये बद्धेषु कर्मप्रदेशेषु ज्ञानावरणीयाद्यष्टकर्मणां स्वस्वविभागे कियन्तः कर्मप्रदेशाः परिणमन्तीति चिन्तयिष्यते ।

(२) द्वितीयं स्थानद्वारं द्विविधम्, तद्यथा–योगस्थानद्वारं प्रदेशबन्धस्थानद्वारं च । तत्र योगस्थानद्वारनिरूपणं द्विविधम्, तद्यथा–प्रथमं योगस्थानद्वारनिरूपणं श्रीशिवशर्मसूरिपादप्रणीतकर्मप्रकृत्या उद्धृतं संक्षिप्तं च, द्वितीयं मतान्तरयुक्तं विस्तृतं च । एतच्च स्वयं स्थानद्वारे "जोगपएसेहि दुहा ठाणस्स परूवणा मुणेयव्वा" इत्यादिना वक्ष्यति । कर्मप्रकृत्युद्धृतयोगस्थानद्वारनिरूपणं "अविभागवग्गफड्डगअंतरठाणं अणंतरोवणिहा । जोगे परंपरावुड्ढिसमयजीवप्पबहुगं च" ॥ इति गाथायामुक्तैर्दशद्वारैः करिष्यते । द्वितीयं योगस्थानद्वारनिरूपणमपि द्विविधम् । तत्र प्रथमं योगस्थानद्वारनिरूपणं 'वित्थरमयंतरजुअं तं तिअडपरूवणाहि उण भणिमो । तत्थ तिपरूवणाओ संतपयपमाण-अप्पबहू ॥ इति गाथाप्रदर्शितैस्त्रिद्वारैः, द्वितीयं च 'जोगट्ठाणदुआरे परूवणा अट्ठ हुन्ति अविभागो । वग्गणफड्डगअंतरठाणसमयवड्ढिअप्पबहू ॥" इति गाथोक्ताष्टद्वारैर्वक्ष्यते । तत्राप्यनेकावान्तरद्वाराणि

## * अष्टकर्मणामुत्कृष्टप्रदेशबन्धकादीनामल्पबहुत्वप्रदर्शकं यन्त्रकम् *

ओघत:—अष्टकर्मणामुत्कृष्टप्रदेशबन्धकेभ्योऽनुत्कृष्टप्रदेशबन्धका: अनन्तगुणा:, जघन्यप्रदेशबन्धकेभ्योऽजघन्यप्रदेशबन्धका असंख्यगुणा: ( गाथा० ४७९ ) ( गाथा० ४८६ ) ।

| | सप्तकर्मणाम् | | | आयुष: | | | सप्तकर्मणाम् | | आयुष: | |
|---|---|---|---|---|---|---|---|---|---|---|
| | उत्कृष्टप्रदेशबन्धकेभ्योऽनुत्कृष्ट-प्रदेशबन्धका: | | | उत्कृष्टप्रदेशबन्धकेभ्योऽनुत्कृष्ट-प्रदेशबन्धका: | | | जघन्यप्रदेशबन्धके-भ्योऽजघन्यप्र. ब. | | जघन्यप्रदेशबन्धकेभ्य: ऽजघन्यप्रदेशबन्धका- | |
| | अनन्तगुणा: | संख्यात-गुणा: | असंख्यात-गुणा: | अनन्त-गुणा: | संख्यात-गुणा: | असंख्या-तगुणा: | सख्यात-गुणा: | असंख्यात-गुणा: | संख्यात-गुणा: | असंख्या-तगुणा |
| गति० | ति०सा० | प० म० मानुषी सर्वार्थ० | शेष० ४३ | ति०सा० | ..म.मानु. आनताद्य-ष्टादशदेव. | शेष० २६ | प. म. मानुषी. सर्वार्थ. | शेष० ४५ | प.म.मानु. आनताद्य ष्टदशदेव | शेष० २७ |
| इन्द्रिय० | | | सर्व० | | | सर्व० | | सर्व० | | सर्व० |
| काय० | | | सर्व० | | | सर्व० | | सर्व० | | सर्व० |
| योग० | कायसा., औदारिक द्विक. कार्म. | आहारक-द्विक० | शेष० १२ | कायसा., औदारिक-द्विक० | आहारक-द्विक० | शेष० ११ | आहारक-द्विक० | शेष. १६ | आहारक-द्विक० | शेष० १४ |
| वेद० | नपुं० | अवेद० | स्त्री. पु. | नपुं० | | स्त्रीपुरुष० | अवेद० | त्रिवेद० | | सर्व. |
| कषाय० | सर्व० | | | सर्व० | | | | सर्व० | | सर्व. |
| ज्ञान० | मतिश्रुता० | मन:प० | शेष० ४ | मतिश्रुता- | मन:प० | शेष० ४ | मन:पर्यव. | शेष० ६ | मन:प० | शेष० ६ |
| संयम० | असंयम० | सं.सा.,सा छे.प ,सू. | देशविर० | असंयम० | सं.सा.सा. छे. प० | देशविरति० | स.सा.सा. छे.,प.सू. | शेष० २ | स.सा.सा. छे. प. | शेष.२ |
| दर्शन० | अचक्षुर्द० | | चक्षुरवधि. | अचक्षुर्द० | | चक्षुरवधि० | | सर्व० | | सर्व. |
| लेश्या० | अशुभ० | | शुभले० | अशुभ० | शुक्ल० | तेज:पद्म० | | सर्व० | शुक्ल० | शेष.५ |
| भव्य० | सर्व० | | | सर्व० | | | | सर्व० | | सर्व. |
| सम्य० | मिथ्यात्व० | | शेष० ६ | मिथ्या० | क्षायिक. | शेष० ३ | | सर्व० | क्षायिक० | शेष.४ |
| संज्ञि० | असं० | | सं० | असं० | | सं० | | सर्व० | | सर्व. |
| आहा० | सर्व० | | | आहा० | | | | सर्व० | | आहा. |
| मार्गणा-संख्या | २३ | १२ | ११५ | २१ | २६ | ११३ | १२ | १५८ | २९ | १३४ |
| गाथा० | ४७९/४८१ | ४८१-४८२ | ४८२ | ४८३-४८४ | ४८४-४८५ | ४८५ | ४८६-४८७ | ४८७ | ४८८-४८९ | ४८९ |

## * अष्टकर्मणामुत्कृष्टादित्रिविधप्रदेशबन्धकानामल्पबहुत्वप्रदर्शकं यन्त्रकम् *

ओघतः—अष्टानामपि कर्मणामुत्कृष्टप्रदेशबन्धका अल्पाः, ततो अजघन्यप्रदेशबन्धका अनन्तगुणाः, ततोऽजघन्यानुत्कृष्ट-प्रदेशबन्धका असंख्यगुणाः (गाथा० ४९० )।

### आदेशतः सप्तकर्मणाम्

| अल्पबहुत्वम् | मार्गणाः |
|---|---|
| उत्कृ.प्र.ब अल्पाः, ततो ज प्र.ब अनन्तगु.। ततोऽज. प्र. ब. असंख्यगुणाः | ति. सा. काययो. सा. औदा द्विक कार्मण. नपु. सर्वकषाय. मतिश्रुताज्ञान. असंयम. अचक्षु. अशुभलेश्या. भव्याभव्य. मिथ्या. असं. आहा. अना. २३. ( गाथा० ४९१-४९२ )। |
| उ. प्र. ब. अल्पाः। ततो ज. प्र. ब. असं. गु. । ततोऽज. प्र. ब. असं. गु.। | पञ्चेन्द्रिय. तिर्यगोघ. म. ओघ., एकद्वित्रिचतुष्पञ्चेन्द्रियौघ. बा. एके. ओघ. पृथ्व्यादिपञ्च. निगोदोघ. त्रसोघ. बादरपृथ्व्यप्तेजोवायुनिगो. प्रत्येक. सा. पञ्चमन.. पञ्चवचन. वै मि. मिश्रसम्य. ३३ ( गाथा० ४९३-४९४ )। |

| अल्पबहुत्वम् | मार्गणाः |
|---|---|
| षण्णाम्—उत्कृ.प्र.ब अल्पाः। ततो ज प्र ब संख्या.गु.। ततोऽजघन्य प्र ब सं.गु.<br>मोहस्य जघ.प्र.ब.अल्पाः । तत उ प्र. ब.स गु० ,, ,, ,, ,, ,, | पर्या. मनु. मानु. मन.पर्यव. संयमौघ. सूक्ष्म =५ ( गाथा० ४९५-४९६ ) |
| जघ० प्र. ब. अल्पाः, तत उ. प्र. ब. संख्या. गु., तत अज. प्र ब, स. गु. | सर्वार्थ.आहा सामा.छेदो.परि०(गा.४९७ |
| षण्णाम्:-उ. प्र. ब. अल्पा, ततो ज. प्र. ब. असंगु. ततोऽजघ. प्र. ब. असं. गु.<br>मोहस्य-ज. प्र ब. ,, तत. उ. , , ,, ,, ,, ,, ,, | पर्या पञ्चे. पर्या. त्रस. मतिश्रुतावधि. चक्षुरवधि. सम्य. संज्ञि.९ (गा. ४९९) |
| उ. प्र. ब. अल्पा, ततो ज प्र ब. स गु. ततोऽजघ. प्र ब स गु. | आहा. मिश्र., अवेद. २ ( गा. ५०० ) |
| ज. प्र. ब. अल्पाः, तत उ. प्र ब असं. गुणा, ततोऽजघ. प्र. ब. असं. गुणाः<br>मतान्तरेण-.उ० प्र. ब. अल्पाः, ततो ज. प्र. . ,, ,, ,, ,, ,, | विभङ्ग० १ ( गाथा० ५०१ ) |
| षण्णाम् -उ.प्र.ब.अल्पाः, ततो ज.प्र. ब सं. गुणा . ततोऽजघ. प्र. ब. असं. गुणा<br>मोहस्य-ज. प्र. ब. ,, , तत उ प्र. ,, असं गुणाः ,, ,, ,, ,, ,, ,, | शुक्ल. क्षायिक. २ (गा.५०३-५०४) |
| षण्णाम् -ज प्र.ब. अल्पाः, तत उ.प्र ब सं. गुणा., ततोऽजघ. प्र. ब. असं गुणा<br>मोहस्य ,, ,, ,, ,, ,, , असं गुणा., ,, ,, ,, ,, ,, | उपशम० १ गाथा० ५०४-५०५) |

| अल्पबहुत्वम् | मार्गणाः |
|---|---|
| जघ प्र. ब. अल्पा. । ततः उ. प्र. ब. असं गुणाः, ततोऽज प्र ब. असंख्यगुणा. । | शेषगति. ४१. शेषेन्द्रिय. १२, शेषकाय. २८, वैक्रिय. स्त्रीपुरुषवेद. देशवि. तेज पद्म. क्षायो० सास्वा० =८९ ( गाथा० ५०६ ) |

### आदेशत आयुषः

| अल्पबहुत्वम् | मार्गणाः |
|---|---|
| उ.प्र ब अल्पा ततो ज प्र ब अनन्तगु ततोऽज प्र ब असं गु | ति सा का० सा. औ द्विक. नपु. सर्वकषा मतिश्रुता. असंय., अचक्षु. अशु. लेश्या., भव्याभव्य., मिथ्या असं. आहा. २१ ( गाथा० ५०७-५०८ ) |
| उ प्र ब. अल्पा, ततो ज प्र ब स.गु. ततोऽज. प्र. ब सं. गु | पर्या मनु मानु आनताद्यष्टादशदेव , आहा मि . मन पर्यव., संय., सामा. छेदो परि शुक्ल क्षायिक २८ ( गाथा० ५०९-५१० ) |
| स्वयं ज्ञात्वा. अन्यतज्ज्ञातृमकाशाद् ज्ञात्वा वा वक्तव्यम् | अप. मनु सूक्ष्मैके, अपर्याप्तसूक्ष्मबादरैके. द्वित्रिचतुरि, सूक्ष्मपृथ्व्यप्तेजोवायुनिगोदौघ अपर्याप्तसूक्ष्मपृथ्व्यप्तेजोवायुनिगोद., अपर्याप्तबादरपृथ्व्यप्तेजोवायुनिगो अपर्या प्र. व, २३ ( गाथा० ५११ ) |
| ज. प्र ब अल्पा, तत उ प्र.ब स गु ततोऽज प्र ब स गु | आहारककाय० १ ( गाथा० ५१२ ) |
| उ.प्र.ब. अल्पाः, ततो ज.प्र ब. असं गु. ततोऽज. प्र. ब. असं. गु. | शेषगति. २५, शेषेन्द्रिय १३, शेषकाय. २६, शेषयोग. ११, स्त्री. पु.०, त्रिज्ञान० विभङ्ग देश०, चक्षुरवधि०, तेजःपद्म०, सम्य क्षायो० सास्वा संज्ञि =९० ( गाथा० ५१३ ) |

## * नानाजीवाश्रितान्तरप्रदर्शकं यन्त्रकम् *

ओघतः—अष्टकर्मणामुत्कृष्टप्रदेशबन्धकानामन्तरं जघन्यत एकसमय उत्कृष्टतः श्रेण्यसंख्यातभागः। अष्टकर्मणामनुत्कृष्ट-जघन्याजघन्यप्रदेशबन्धकानामन्तरं नास्ति।

| गाथा० | — आदेशतः सप्तकर्मणामुत्कृष्टप्रदेशबन्धकानामन्तरम् — | |
|---|---|---|
| | अन्तराभावः | सर्वैकेन्द्रिय० सर्वनिगोद० शेषसूक्ष्म० १२, बादरापर्याप्तपृथ्व्यप्तेजोवायुप्रत्येकवन० वन० ओघ० ३२ |
| | जघन्यतः समयः, उत्कृष्टतः श्रेण्यसंख्यातभागकालः | शेषासु १३८ मार्गणासु। |

### आदेशतः सप्तकर्मणामनुत्कृष्टाजघन्यप्रदेशबन्धकानामन्तरम्

मनुष्याद्यकादशमार्गणासु जघन्यतः समयः, उत्कृष्टतो यन्त्रकादवसेयम्, नवरं तत्रापि छेदोपस्थापनीयपरिहार-विशुद्धिकयोर्जघन्यान्तरं स्वयं ज्ञेयम्। शेषासु १५९ मार्गणासु नास्त्यन्तरम्।

| | — मार्गणा — | | — मार्गणा — |
|---|---|---|---|
| पल्योपमासंख्यातभागः | अपर्या. नर. सास्वा. मिश्र. | वर्षपृथक्त्वम् | आहा. द्विक. |
| द्वादशमुहूर्त्ताः | वै. मिश्र० | १८ कोटिकोटिसागरो० | छेदो. परि. |
| षण्मासाः | अवेद. सूक्ष्मसम्प. | सप्तदिनानि | उपशम० |

### आदेशत आयुष उत्कृष्टप्रदेशबन्धकानामन्तरम्

| | |
|---|---|
| अन्तराभावः | सर्वैकेन्द्रिय-सर्वनिगोद-द्वादशशेषसूक्ष्मबादरापर्याप्तपृथ्व्यप्तेजोवायुप्रत्येकवन. वन. ओघ. ३२ |
| ओघवत् ज. १ समयः उत्कृ. श्रेण्यसंख्यभागः | शेषासु १३१ मार्गणासु |

### आदेशत आयुषोऽनुत्कृष्टाजघन्यप्रदेशबन्धकानामन्तरम्

| | |
|---|---|
| अन्तराभावः | ति. सा. सर्वैकेन्द्रिय. सर्वनिगोद. १२ शेषसूक्ष्म. पृथ्व्यप्तेजोवायुकायौघबादरापर्याप्त-बादर. वन. ओघ. प्रत्येकवनौघापर्याप्तप्र. कायौघ. औ. द्विक. नपु. सर्वकषाय. मतिश्रुताज्ञान. असंय. अच. अशुभलेश्या. भव्याभव्य. मिथ्या. अस. आहा.—६२ |
| जघ० १ समयः | शेषासु १०१ मार्गणासु |
| उत्कृष्टतः अन्तर्मु. | पञ्चेन्द्रियतिर्यगोघ. अप. पञ्चे. ति. द्वित्रिचतुःपञ्चेन्द्रियौघ. द्वित्रिचतुःपञ्चे-न्द्रियापर्या. त्रसौघ. त्रसाप. १२. |
| उत्कृ० स्वयं ज्ञेयम् | शेषासु ८९ मार्गणासु |

### 卐 अष्टकर्मणां जघन्यप्रदेशबन्धकानामन्तरम्

| | |
|---|---|
| अन्तराभावः | अनन्तरोक्तासु ६२ मार्गणासु कार्मणानाहारकयोश्च ६४ |
| जघ. १ समयः | शेषासु १०६ मार्गणासु |
| उत्कृ. श्रेण्यसंख्यभागः | शेषासु १०६ मार्गणासु |

卐 किन्तु यास्वायुर्न बध्यते तासु वैक्रियमिश्रादिसप्तमार्गणासु सप्तकर्मणामिति वाच्यम्।

## प्रश्नाधिकारः समाप्तः

॥ ॐ ह्रीँ अर्हँ नमः ॥

# ॥ भूयस्काराधिकारः ॥

तदेवं प्रथमोऽधिकारः प्ररूपितः। सम्प्रति क्रमागतं द्वितीयं भूयस्काराधिकारं वक्तुकामो द्वारप्रतिपादकं गाथाद्विकमाह—

दुइए भूओगारे अहिगारम्मि हविरे दुआराइं।

तेरस संतपयं तह सामी कालंतराइं च ॥५१४॥

भंगविचयो य भागो परिमाणं खेत्तकोसणाउ तहा।

कालो अंतरभावा अप्पाबहुगं जहाकमसो ॥५१५॥

(प्रे०) 'दुइए' इत्यादि, द्वितीये भूयस्कारेऽधिकारे सत्पदं, स्वामित्वं, कालः, अन्तरं, भङ्गविचयः, भागः, परिमाणं, क्षेत्रं, स्पर्शना, कालः, अन्तरं, भावोऽल्पबहुत्वं चेति त्रयोदश द्वाराण्यनुक्रमेण निरूपयिष्यन्ते। विना सत्पदं स्वामित्वादिद्वादशद्वाराणि प्रथमाधिकारे यथा-निरूपितानि तथैवाऽत्रापि निरूपयिष्यन्ते। नवरं तानि प्रथमाधिकारे उत्कृष्टप्रदेशबन्धकादीनाश्रित्य चिन्तितानि, परमत्र तु भूयस्कारादिचतुष्पदान्याश्रित्य चिन्तयिष्यन्ते। सत्पदद्वारे भूयस्कारादीनां सत्ता प्रतिपादयिष्यते ॥५१४।५१५॥

तदेवं द्वितीयाधिकारगतद्वाराणां यथाक्रमं नामकीर्तनं विधाय सम्प्रति निर्देशस्य यथोद्देशत्वात् प्रथमं प्रथमद्वारनिरूपणोपचिक्रंसयाऽऽदौ तावदोघतोऽष्टकर्मसु सम्भाव्यमानानि भूयस्कारादिप्रदेशबन्धप्रकारान् दर्शयन्नाह—

अट्ठण्हं कम्माणं अत्थि पएसस्स चउविहो बंधो।

भूगारो अप्पयरो अवट्ठिओ तह अवत्तव्वो ॥५१६॥

(प्रे०) "अट्ठण्ह" इत्यादि, ज्ञानावरणीयप्रमुखाष्टकर्मणां, "पएसस्स" इति, एकवचनस्य जातिनिमित्तकत्वात् प्रदेशानां बन्धश्चतुष्प्रकारो भवति। अथ तस्य चतुष्प्रकारानेव नामग्राहमाह-'भूगारो' इत्यादि, प्रथमो बन्धो भूयस्कारः, द्वितीयः 'अल्पतरः', तृतीयः 'अवस्थितः', तथा चतुर्थः 'अवक्तव्यः'।

तत्र (१) भूयस्कार इति कोऽर्थः? करणं कारः, "भावाकर्त्रोः" (सिद्धहेम० ५।३।१८) इति भावे 'घञ्' प्रत्ययः, भूयसः कारः=भूयस्कारः, "कृति" (सिद्धहेम० ३।१।७७) इति षष्ठीतत्पुरुषसमासः, भूयसः=अव्यवहितप्राक्तनसमयापेक्षया विवक्षितसमयेऽधिकस्य प्रदेशबन्धस्य यत्करणं तदत्र पूर्वमहर्षिभिः "भूयस्कारः" इति संज्ञया कीर्त्यते इत्यर्थः। अतो यदा जीवो यस्य कर्मणः प्राक्तनसमयादनन्तरसमये योगाधिक्यादिनाऽधिकप्रदेशानां बन्धं विदधाति तदा तस्य कर्मणो भूयस्काराभिधः प्रदेशबन्धो भवति।

(२) 'अप्पयरो' इति अल्पतरः, अव्यवहितपूर्वसमयापेक्षया विवक्षितसमयेऽल्पो यो बन्धः सः "अल्पतरः" इत्यभिधानेन मीयते । अतो यदा यस्य कर्मणः प्राक्तनसमयादनन्तरसमये योगहान्यादिना न्यूनप्रदेशानां बन्धो भवति तदा तस्य कर्मणोऽल्पतराभिधानः प्रदेशबन्धो भवति ।

(३) 'अवट्ठिओ' इति, अवस्थितः, पूर्वसमयादनन्तरसमये तावानेव स्थितः प्रदेशबन्धः 'अवस्थितः' इत्यभिधेयेन निगद्यते । अतो यदा जीवो यस्य कर्मणः पूर्वसमयादनन्तरसमये योगतौल्यादिना तावतामेव प्रदेशानां बन्धं विदधाति, अर्थाद् यदा पूर्वसमये यावन्ति कर्मदलिकानि बद्धवान् तदनन्तरसमयेऽपि तावन्त्येव कर्मदलिकानि बध्नाति तदा तस्य कर्मणोऽवस्थिताभिधेयः प्रदेशबन्धो भवति ।

(४) 'अवत्तव्वो' इति, अवक्तव्यः, वक्तुं न शक्य इत्यवक्तव्यः । यः प्रदेशबन्धो भूयस्काराल्पतरावस्थितलक्षणत्रिविधबन्धमध्ये केनाऽपि बन्धेन वक्तुं न शक्यते स 'अवक्तव्यः' इति नाम्नोच्यते । अतो यदा यस्य कर्मणो बन्धविच्छेदोऽबन्धो वा भूत्वा पुनर्बन्धो भवति, यद्वा तीर्थंकरनामकर्मादिवन्नवीन एव प्रदेशबन्धो भवति, तदा तस्य कर्मणः पुनर्बन्धप्रथमसमये नव्यबन्धप्रथमसमये वाऽवक्तव्यनामा प्रदेशबन्धो भवति । यतः स प्रदेशबन्धोऽव्यवहितप्राक्तनसमये प्रदेशबन्धस्यैवाभावादव्यवहितप्राक्तनसमयापेक्षयाऽधिकप्रदेशबन्धाभावाद् भूयस्कार इति वक्तुं न शक्यते, नाप्यल्पतर इति, अल्पप्रदेशबन्धाभावाद्, एवं तुल्यप्रदेशबन्धाभावादवस्थित इत्यपि वक्तुं न शक्यते ।

अथाष्टकर्मणां चतुर्विधबन्धस्योपपत्तिप्रकारः प्रतन्यते—अत्र भूयस्कारो योगाधिक्यप्रयुक्तः, अल्पप्रकृतिबन्धप्रयुक्तस्तदुभयप्रयुक्तश्चेति त्रिधा भवति । तत्र जीवः पूर्वसमयादनन्तरसमयेऽधिकं योगं प्राप्य यमधिकप्रदेशबन्धलक्षणभूयस्कारबन्धं विदधाति सोऽधिकयोगवशाद् जायमानत्वाद्योगाधिक्यप्रयुक्तो भवति । स चामुकजीवानाममुककाल एव भवितुमर्हतीति न नियमः, सकषायप्रदेशबन्धार्हस्य यस्य कस्यापि जीवस्य यदा पूर्वसमयापेक्षयाऽनन्तरसमये योगवृद्धिर्भवति तदा भवति । अथायुर्बन्धान्तिमसमयादग्रेतनप्रथमसमये यः सप्तप्रकृतीनामधिकप्रदेशबन्धलक्षणभूयस्कारबन्धो भवति सोऽल्पप्रकृतिबन्धेन जायमानत्वादल्पप्रकृतिबन्धप्रयुक्तो भवति । स च मिश्रगुणस्थानमन्तराऽप्रमत्तगुणस्थानं यावद् वर्तमानानां जीवानां भवति, मिश्रगुणस्थानेऽप्रमत्तगुणस्थानात्परतश्चायुषोऽबध्यमानत्वाद् । एवं सूक्ष्मसम्पराये प्रथमसमये षण्णां प्रकृतीनां योऽधिकप्रदेशबन्धलक्षणभूयस्कारो बन्धः सोऽपि अल्पप्रकृतिबन्धप्रयुक्तो भवति । स च श्रेणिमारोहतो जीवस्य सूक्ष्मसम्परायप्रथमसमय एव भवति । अथाऽल्पप्रकृतिबन्धप्रथमसमये यदि पूर्वसमयापेक्षया योगोऽधिकस्तर्हि अल्पप्रकृतिबन्धप्रथमसमये योऽधिकप्रदेशबन्धलक्षणभूयस्कारबन्धः स योगाधिक्याल्पप्रकृतिबन्धोभयप्रयुक्तो भवति ।

एवमल्पतरबन्धोऽपि योगहानिप्रयुक्तः, अधिकप्रकृतिबन्धप्रयुक्तस्तदुभयप्रयुक्तश्चेति त्रिधा भवति। तत्र पूर्वसमयादनन्तरसमये योगहान्या यः स्तोकप्रदेशबन्धलक्षणोऽल्पतरबन्धः स योगहानिप्रयुक्तो भवति। अत्रापि योगाधिक्यप्रयुक्तभूयस्कारवत्र कालनियमः, नाऽपि जीवनियमः। अथाऽऽयुर्बन्धप्रथमसमये सप्तकर्मणामल्पतरबन्धोऽधिकप्रकृतिबन्धप्रयुक्तो भवति। स च मिश्रगुणस्थानं विना प्रमत्तगुणस्थानं यावद् भवति। एवमनिवृत्तिबादरसम्परायगुणस्थानप्रथमसमये षट्कर्मणां यः स्तोकप्रदेशबन्धलक्षणोऽल्पतरबन्धः सोऽप्यधिकप्रकृतिबन्धप्रयुक्तो भवति। स च श्रेणितो निवर्तमानानां जीवानामनिवृत्तिबादरसम्परायप्रथमसमये भवति। एवमधिकप्रकृतिबन्धप्रथमसमये यदि पूर्वसमयापेक्षया योगो हीनस्तर्हि अधिकप्रकृतिबन्धप्रथमसमये योऽल्पतरप्रदेशबन्धः स योगहान्यधिकप्रकृतिबन्धोभयप्रयुक्तो भवति।

एवमवस्थितबन्धोऽपि त्रिधा भवति। तद्यथा—तुल्यप्रकृतिबन्धतुल्ययोगप्रयुक्तः, अधिकप्रकृतिबन्धाधिकयोगप्रयुक्तः, अल्पप्रकृतिबन्धाल्पयोगप्रयुक्त इति। तत्र यदा पूर्वसमये यावत्यः प्रकृतयो बध्यन्ते यावत्प्रमाणश्च योगस्तदनन्तरसमयेऽपि तावत्य एव प्रकृतयो बध्यन्ते तावत्प्रमाणश्च योगस्तदा तुल्यप्रकृतिबन्धतुल्ययोगप्रयुक्तोऽवस्थितप्रदेशबन्धो भवति। स च सकषायप्रदेशबन्धं कुर्वतां सर्वजीवानां भवति। आयुर्बन्धप्रथमसमये सप्तकर्मणामवस्थितप्रदेशबन्धोऽधिकप्रकृतिबन्धाधिकयोगप्रयुक्तो भवति। स च मिश्रगुणस्थानमन्तरा प्रमत्तगुणस्थानं यावद् भवति। एवं मोहनीयपुनर्बन्धप्रथमसमयभावी षट्कर्मणामवस्थितबन्धोऽप्यधिकप्रकृतिबन्धाधिकयोगप्रयुक्तो भवति। स च श्रेणितो निवर्तमानस्य जीवस्यानिवृत्तिबादरसम्परायगुणस्थानप्रथमसमये भवति। अथायुर्बन्धान्तिमसमयादनन्तरसमये यदा योगस्य हानिर्भवति तदा सप्तकर्मणामल्पप्रकृतिबन्धाल्पयोगप्रयुक्तोऽवस्थितबन्धो भवति। स च मिश्रगुणस्थानमृतेऽप्रमत्तगुणस्थानं यावद् भवति। एवं सूक्ष्मसम्परायगुणस्थानप्रथमसमये यदा योगस्य हानिर्भवति तदा षट्कर्मणामवस्थितबन्धोऽल्पप्रकृतिबन्धाऽल्पयोगप्रयुक्तो भवति। स च श्रेणिमारोहतां जीवानां सूक्ष्मसम्परायप्रथमसमये भवति।

अथावक्तव्यबन्धो भाव्यते, तद्यथा—यदोपशमकः सूक्ष्मसम्पराये मोहनीयस्योपशान्तमोहे च ज्ञानावरणीयादिषट्कर्मणां प्रदेशबन्धविच्छेदं कृत्वा प्रतिपत्य सूक्ष्मसम्पराये षण्णामनिवृत्तिबादरसम्पराये च मोहनीयस्य पुनः प्रदेशबन्धं प्रारभते तदा पुनर्बन्धप्रथमसमये तेषामवक्तव्याभिधो बन्धो भवति। अर्थात्प्रतिपातापेक्षया सूक्ष्मसम्परायप्रथमसमये षण्णामनिवृत्तिबादरसम्परायप्रथमसमये च मोहनीयस्यावक्तव्यबन्धो भवति।

तथोपशान्तमोहात्पञ्चत्वं प्राप्तस्य जीवस्य देवगतिप्रथमसमये यो ज्ञानावरणीयादिसप्तप्रकृतीनां बन्धः सोऽप्यवक्तव्याभिधः। उपशान्तमोहे सप्तानामपि कर्मणामबध्यमानत्वात्। यस्त्वेकसामयिकः सातवेदनीयस्य प्रदेशबन्धः स इह न विवक्ष्यते, तस्य सकषायाभावात्, इह तु सकषाय-

प्रदेशबन्धनिरूपणस्यैव प्रस्तुतत्वात् । आयुषश्च बन्धो कस्यापि जीवस्य सर्वदा न भवतीति यदा स्वायुश्चरमतृतीयभागाद्यक्षणादित आयुर्बन्धं प्रारभते तदा प्रथमसमयेऽवक्तव्याभिधो बन्धो भवति ॥५१६॥

साम्प्रतं स्वयमेव भूयस्कारादीनां लक्षणं निर्दिधारयिषुः तल्लक्षणप्रतिपादकं गाथाद्विकमाह—

पुव्वसमयाउ समये अणंतरे बंधए पहुत्तयरं ।
बंधो स भूअगारोऽप्पयरं बंधइ स अप्पयरो ॥५१७॥
तावइअं चिअ बंधइ सो णायव्वो अवट्ठिओ बंधो ।
होउं अबंधगो उण बंधइ स हवइ अवत्तव्वो ॥५१८॥

(प्रे०) "पुव्वसमयाउ" इत्यादि, जीवो यदा पूर्वसमयादनन्तरे समये, 'बंधए पहुत्तयरं' इति, प्रभूततरमिति जातावेकवचनम्, कर्मदलिकमिति प्रकरणाद् गम्यते, प्रभूतानि कर्मदलिकानि बध्नाति तदा, "बंधो स भूअगारो" इति, स प्रदेशबन्धो भूयस्काराभिधो भवति । 'अप्पयरं बंधइ' इति, अल्पतरमिति पूर्ववज्जातावेकवचनम्, 'पुव्वसमयाउ' इत्याद्यत्र सम्बध्यते, जीवो यदा पूर्वसमयादनन्तरसमये स्तोकानि कर्मदलिकानि बध्नाति तदा, "स अप्पयरो" इति, स प्रदेशबन्धोऽल्पतराभिधो भवति । "तावइअं चिअ" इत्यादि, जीवो यदा पूर्वसमयादनन्तरसमये तावन्त्येव कर्मदलिकानि बध्नाति तदा प्रदेशबन्धोऽवस्थितनामा ज्ञातव्यः । 'होउं अबंधगो' इति, जीवो यदा प्रकृतेर्बन्धविच्छेदेनाबन्धेन वा कर्मप्रदेशानामबन्धको भूत्वा 'उण बंधइ' इति, पुनर्बध्नाति तदा पुनर्बन्धप्रथमसमये, "स हवइ अवत्तव्वो" इति, स प्रदेशबन्धोऽवक्तव्याभिधेयो भवति । इति गाथाद्विकस्याक्षरगमनिका । विस्तरतस्त्वनन्तरगाथायां भावितमेवेत्यत्र पुनर्न प्रपञ्च्यते ॥५१७।५१८॥

साम्प्रतमादेशतश्चतुर्विधप्रदेशबन्धं जिज्ञापयिषुरादौ तावद्यासु मार्गणासु चत्वारोऽपि प्रकाराः सम्भवन्ति ता गाथाद्विकेन निर्वक्ति—

चत्तारो खलु बंधा आउगवज्जाण अत्थि तिणरेसुं ।
दुपणिंदितसेसुं तह पणमणवयकायउरलेसुं ॥५१९॥
चउणाणावेएसुं संयमतिदरिसणसुक्कभवियेसुं ।
सम्मत्ताउवसमेसुं खइए सण्णिम्मि आहारे ॥५२०॥

(प्रे०) "चत्तारो" इत्यादि, खलु वाक्यालङ्कारे, आयुर्वर्जानां ज्ञानावरणीयादिसप्तकर्मणां भूयस्कारादयश्चत्वारोऽपि बन्धा भवन्ति । कासु मार्गणासु ? इत्याह—'तिणरेसु' इत्यादि, मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणत्रिमनुष्येषु, पञ्चेन्द्रियौघपर्याप्तपञ्चेन्द्रियरूपद्विपञ्चेन्द्रिययोः, त्रसौघपर्याप्तत्रसलक्षणद्वित्रसयोः, तथा समुच्चये, पञ्चमनःपञ्चवचनकाययोगौघौदारिककाययोगेषु मतिश्रुता-

वधिमनःपर्यवलक्षणेषु चतुर्ज्ञानेषु, अवेदे, संयमौघे, दर्शनत्रिके, शुक्ललेश्यायां, भव्ये, सम्यक्त्वौघोपशमक्षायिकसम्यक्त्वेषु, संज्ञिनि, आहारके चेति पञ्चत्रिंशन्मार्गणासु ।

इयमत्र भावना—एतासु मार्गणासु 'मइणई कम्माणं' इत्यादिसत्पदद्वारप्रथमगाथावृत्तिनिगदितरीत्या यदाऽधिकयोगेनाऽल्पप्रकृतिबन्धादिना वा, पूर्वसमयादनन्तरसमयेऽधिकानि कर्मदलिकानि बध्यन्ते तदा भूयस्काराभिधः प्रदेशबन्धो भवति । एवं यदा स्तोकयोगेनाऽधिकप्रकृतिबन्धादिना वा पूर्वसमयादनन्तरसमयेऽल्पानि कर्मदलिकानि बध्यन्ते तदाऽल्पतराभिधानप्रदेशबन्धो भवति । एवमवस्थितबन्धोऽप्येतासु मार्गणासु सुगमः । तथा मनुष्यौघादिपञ्चत्रिंशन्मार्गणासूपशमश्रेणेः सत्त्वादुपशान्तमोहे सप्तकर्मणां सकषायप्रदेशबन्धस्याभावो वर्तते । तदनन्तरं षट्कर्मणां प्रदेशबन्धं सूक्ष्मसम्परायप्रथमसमयाद् मोहनीयस्य चानिवृत्तिबादरसम्परायप्रथमसमयात्पुनः प्रारभते इति षट्कर्मणां सूक्ष्मसम्परायप्रथमसमये मोहनीयस्य चानिवृत्तिबादरप्रथमसमयेऽवक्तव्यसंज्ञकः प्रदेशबन्धो भवति । यद्वा कतिपयमार्गणासूपशान्तमोहगुणस्थानात्पश्चत्वं प्राप्य देवगतिप्रथमसमयात्सप्तकर्मबन्धं प्रारभत इति देवगतिप्रथमसमये सप्तानामपि युगपदवक्तव्यबन्धो भवति ॥५१९।५२०॥

इदानीं यासु मार्गणासु सप्तकर्मणां भूयस्कारबन्ध एव प्रवर्तते ताः पूर्वार्धेनोत्तरार्धेन च शेषमार्गणासु सम्भाव्यमानभूयस्कारादिबन्धप्रकारान् दर्शयति—

मीसदुजोगेसु तहा कम्माणाहारगेसु भूगारो ।
सेसासु भूअगारो अप्पयरोऽवट्ठिओ अत्थि ॥५२१॥

(प्रे०) "मीसदुजोगेसु" इत्यादि, सूत्रमात्रत्वात्सूत्रस्य वैक्रियमिश्राहारकमिश्रलक्षणद्विमिश्रकाययोगयोः, कार्मणकायेऽनाहारके चेति चतुर्मार्गणासु 'भूगारो' इति, भूयस्कारबन्ध एव भवति, नान्येऽल्पतरबन्धादयः । इयमत्र हृदयम्—एतासु मार्गणासु वर्तमानानां जीवानां अपर्याप्ताऽवस्थैव वर्तते । अपर्याप्तावस्थायां च प्रागनेकश उल्लिखितात् "सव्वोवि अपज्जत्तगो पइखणमसंखगुणाए जोगवुड्ढीए वड्ढइ" इति वचनात्प्रतिसमयमसंख्यगुणा योगवृद्धिर्भवति । तत एतासु मार्गणासु वर्तमानानां जीवानां पूर्वपूर्वसमयात्तदव्यवहितोत्तरोत्तरसमयेऽसंख्यगुणयोगाधिक्यप्रयुक्ताधिकप्रदेशबन्धलक्षणभूयस्कारबन्ध एव भवति । इति पूर्वसमयादनन्तरसमयेऽल्पप्रदेशबन्धाभावादल्पतरबन्धस्तुल्यप्रदेशबन्धाभावाच्चावस्थितबन्धो न भवति । एवमपर्याप्तावस्थायां सप्तप्रकृतीनामबन्धो भूत्वा पुनर्बन्धो न भवतीत्यवक्तव्याभिधबन्धोऽपि न भवति ।

ननु "सव्वोऽवि अपज्जत्तगो" इत्यादिवचनाद् वैक्रियमिश्रादिवदौदारिकमिश्रे सर्वापर्याप्तमार्गणासु च प्रतिसमयमसंख्यगुणयोगवृद्धिर्भवतीति तास्वपि भूयस्कारबन्धेनैव भवितव्यमिति चेद्, न, "सव्वोऽवि" इत्यादिवचनस्य सामान्यप्रतिपादनपरत्वाद् । इदमुक्तं भवति—"सव्वोऽवि अपज्जत्तगो"

इत्यादिवचनं करणापर्याप्तान् जीवानाश्रित्यास्तीति वैक्रियमिश्रादिमार्गणासु करणापर्याप्तानां जीवानामेवास्तित्वेन भूयस्कारबन्ध एव भवति। परन्तु लब्ध्यपर्याप्तानां जीवानां तु स्वायुर्द्वित्रिभागात्परतो योगस्य वृद्धिर्हानिरवस्थानं चेति त्रीण्यपि प्रवर्तन्ते। ततो यदा योगस्य वृद्धिस्तदा भूयस्कारबन्धः, यदा हानिस्तदाऽल्पतरबन्धः, यदाऽवस्थानं तदाऽवस्थितबन्धो भवतीति औदारिकमिश्रयोगे सर्वलब्ध्यपर्याप्तमार्गणासु च भूयस्कारादित्रिविधबन्धो भवति।

न चाहारकमिश्रकाययोगमार्गणायामायुर्बन्धप्रथमसमये भागहाराणामधिकत्वात्सप्तकर्मणामल्पतरप्रदेशबन्धेनाऽपि भवितव्यमिति वक्तव्यम्, योगस्यासंख्यगुणवृद्धेः। इदमत्र हृदयम्—मार्गणायाः प्रथमसमयादारभ्य चरमसमयं यावत्प्रतिसमयं योगस्यासंख्यगुणवृद्धेः सद्भावात् बध्यमानानि कर्मदलिकान्यप्यसंख्यगुणानि वर्धन्ते। आयुर्बन्धप्रथमसमये भागहरस्त्वेक एव वर्धते। तथाऽऽयुषः स्वतया परिणतानि कर्मदलिकानि सर्वेभ्यो न्यूनानि भवन्ति। इत्येवमाहारकमिश्रे आयुर्बन्धप्रथमसमये भागहाराणामाधिक्येऽपि नाल्पतरबन्धप्रसङ्गः, नाप्यवस्थितबन्धप्रसङ्गः।

**'सेसासु'** इत्यादि, निरूपितव्यतिरिक्तासु एकत्रिंशदधिकशतमार्गणासु सप्तप्रकृतीनां भूयस्कारादित्रिविधबन्धोपपत्तिः सुगमा। नवरमात्रावक्तव्यबन्धः कथं न भवतीत्याशङ्कायां शेषासु मार्गणासु श्रेणेरभावात्सप्तप्रकृतीनां बन्धविच्छेदस्याभावः, ततश्च बन्धविच्छेदमूलकावक्तव्यबन्धस्याप्यभाव इति समाधेयं सुधीभिः। शेषमार्गणा नामत इमाः—सर्वनरकभेदाः, समस्ततिर्यग्भेदाः, अपर्याप्तमनुष्यः, समविबुधभेदाश्चेति चतुश्चत्वारिंशद् गतिभेदाः, निखिलैकद्वित्रिचतुरिन्द्रिया अपर्याप्तपञ्चेन्द्रियश्चेति सप्तदशेन्द्रियभेदाः, त्रसौघपर्याप्तत्रसौ विना चत्वारिंशत्कायभेदाः, औदारिकमिश्रकाययोगः, वैक्रियकाययोग आहारककाययोगश्चेति त्रयो योगभेदाः, वेदत्रिकं, कषायचतुष्कं,मत्याद्यज्ञानत्रिकं,सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायदेशविरतिसंयमासंयमाः, शुक्लामृते पञ्च लेश्याः, अभव्यः, क्षायोपशमिकसास्वादनमिश्रमिथ्यात्वानि, असंज्ञी च।

ननूपशान्तमोहगुणस्थानात्पश्चत्वं प्राप्तस्य जीवस्य देवगतिप्रथमसमये उपशान्तमोहे येषां बन्धो विच्छिन्नस्तेषां ज्ञानावरणीयादिसप्तकर्मणां पुनर्बन्धो भवतीति देवौघादिमार्गणासु अवक्तव्याभिधः प्रदेशबन्धः कथं न भवति? सत्यां कारणकूटोपस्थित्यां कार्यमवश्यं भवतीति चेद्, न, बन्धविच्छेदस्य मार्गणान्तरे सत्त्वात्। यस्यां मार्गणायां बन्धविच्छेदो बन्धाभावो वा तस्यामेव मार्गणायां यदि पुनर्बन्धप्रारम्भस्तर्हि पुनर्बन्धप्रारम्भप्रथमसमयेऽवक्तव्यबन्धो भवति, न पुनर्मार्गणान्तरे बन्धविच्छेदे बन्धाभावे वा सति मार्गणान्तरे च पुनर्बन्धप्रारम्भे सति। अत्र तु मनुष्यमार्गणायां बन्धविच्छेदो देवमार्गणायां च पुनर्बन्धप्रारम्भ इति बन्धविच्छेदपुनर्बन्धप्रारम्भयोरेकमार्गणाधिकरणत्वाभावान्नावक्तव्यबन्धः। अत एव सूक्ष्मसम्परायमार्गणायामपि मोहनीयायुर्वर्जषट्कर्मणामवक्तव्यबन्धप्रसङ्गो न॥५२१॥

ननु तर्हि लोभमार्गणायां मोहनीयस्यावक्तव्यबन्धेन भवितव्यमेव। यत उपशमश्रेणिमारोहन् सूक्ष्मसम्पराये लोभमार्गणायां वर्तमानो जीवो मोहनीयस्य बन्धं विच्छिनत्ति। ततः सूक्ष्मसम्परायगुणस्थानादेव पञ्चत्वं प्राप्य लोभमार्गणायामेव वर्तमानो देवगतिप्रथमसमयाद् मोहनीयं पुनर्बद्धुमुपक्रमत इति बन्धविच्छेदपुनर्बन्धोपक्रमयोरेकमार्गणाधिकरणत्वमस्ति, यद्वाऽद्धाक्षयेण प्रपतज्जीवस्य नवमगुणस्थानकप्रथमसमये मोहनीयस्याऽभिनवबन्धो भवतीति पुनर्बन्धबन्धाभावयोरेकमार्गणायां सत्त्वादिति चेद्, सत्यम्, समीचीनं चिन्तितम्, अत एव ग्रन्थकार इदानीं लोभमार्गणायां मोहनीयस्यापवादं लाघवायुष आदेशतः सम्भाव्यमानान् भूयस्कारादिबन्धप्रकारानेकयैव गाथया निरूपयति—

**लोहेऽत्थि अवत्तव्वो मोहस्साहारमीसजोगम्मि।**
**भूगाराऽवत्तव्वा आउस्सोघव्व सेसासुं ॥५२२॥**

(प्रे०) **"लोहेऽत्थि"** इत्यादि, निगदसिद्धम्। **"आहारमीसजोगम्मि"** इत्यादि, "देहलीदीपकन्यायेन" 'आउस्स' इत्यत्रापि सम्बध्यते, आहारकमिश्रकाययोगे आयुषो भूयस्कारोऽवक्तव्यश्चेति द्विविधो प्रदेशबन्धो भवति। अत्रेदमाकूतम्—अस्यां मार्गणायां प्रथमसमयादारभ्यान्तिमसमयं यावत्प्रतिसमयं योगस्यासंख्यगुणमाधिक्यं भवति। ततः पूर्वसमयादनन्तरसमयेऽधिकप्रदेशबन्धलक्षणो भूयस्कारबन्धो भवति। कदाचिदप्यल्पतरयोगस्याप्राप्यमाणत्वादल्पतरप्रदेशबन्धस्तुल्ययोगस्याप्राप्यमाणत्वाच्चावस्थितबन्धो न भवति। अथ यदाऽऽयुर्बद्धुं प्रक्रमते तदा तत्प्रारम्भप्रथमसमयेऽवक्तव्यबन्धो भवति।

**"आउस्सोघव्व सेसासुं"** इति, शेषासु द्विषष्टिशतमार्गणासु आयुषो भूयस्कारादिबन्धाः ओघवद्, चत्वारोऽपि भवन्तीत्यर्थः। तथाहि—यदा योगस्य वृद्धिर्हानिरवस्थानं च भवति तदाऽनुक्रमेण भूयस्कारबन्धः, अल्पतरबन्धोऽवस्थितबन्धश्च भवति। आयुर्बन्धप्रारम्भप्रथमसमयेऽवक्तव्यबन्धो भवति ॥५२२॥

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे द्वितीये भूयस्काराधिकारे प्रथमं सत्पदद्वारं समाप्तम् ॥

—:: ● ::—

## ॥ द्वितीयं स्वामित्वद्वारम् ॥

तदेवं सत्पदप्ररूपणा कृता। सम्प्रति क्रमिकद्वितीयस्वामित्वद्वारनिरूपणप्रसङ्गः। तत्रादावोघतः सप्तकर्मणामवक्तव्यबन्धस्वामिनं निरूपयितुकाम आह—

**सत्तण्ह अवत्तव्वं कुणए सेढीअ णिवडमाणो उ।**
**मणुसो वा देवो वा वट्टमाणो पढमसमये ॥५२३॥**

(प्रे०) अस्मिन् द्वारेऽष्टकर्मणां भूयस्कारादिचतुर्विधबन्धस्य को जीवः स्वामी भवत्यर्थात् प्रत्येककर्मणश्चतुर्विधबन्धमध्ये प्रत्येकबन्धं को जीवः करोतीति चिन्तनीयत्वादस्य द्वारस्य स्वामित्वेति संज्ञा। 'सत्तण्ह' इत्यादि, ज्ञानावरणीयादिसप्तकर्मणामवक्तव्यबन्धं श्रेणितो निवर्तमानः प्रतिपतन् मनुष्यो, यद्वा 'पढमसमये' इति, भवप्रथमसमये वर्तमानो देवः करोति। इयमत्र भावना–उपशमश्रेणिमारोहन् जीवोऽनिवृत्तिबादरसम्परायगुणस्थाने मोहनीयस्य सूक्ष्मसम्परायगुणस्थाने च ज्ञानावरणीयादिषट्कर्मणां बन्धविच्छेदं विदधाति। ततः सूक्ष्मसम्पराये मोहनीयस्योपशान्तमोहगुणस्थाने च सप्तकर्मणां बन्धाभावः। अथ ततः प्रतिपतन् एव जीवः सूक्ष्मसम्परायगुणस्थाने प्रथमसमयात् षट्कर्मणामनिवृत्तिबादरसम्पराये प्रथमसमयाच्च मोहनीयस्य बन्धं कर्तुं पुनरुपक्रमते इति स ज्ञानावरणीयादिषट्कर्मणां सूक्ष्मसम्परायप्रथमसमये मोहनीयस्य चानिवृत्तिबादरसम्परायप्रथमसमयेऽवक्तव्यबन्धं करोति। स मनुष्य एव भवतीत्युक्तं "सेढीअ णिवडमाणो उ मणुसो वा" इति। अथवा कश्चिज्जीव उपशान्तमोहगुणस्थानाद् निधनं प्राप्य देवगतिप्रथमसमयाद् युगपत्सप्तकर्माणि बद्धुमारभत इति देवोऽपि स्वभवप्रथमसमये सप्तकर्मणां युगपदवक्तव्यबन्धं करोत्यत उक्तं "देवो वा वट्टमाणो पढमसमये" इति ॥५२३॥

साम्प्रतमोघत आयुषोऽवक्तव्यबन्धस्वामिनमष्टकर्मणां शेषभूयस्कारादित्रिविधबन्धस्वामिनं च प्रतिपाद्यादेशतोऽष्टानामपि कर्मणां चतुरोऽपि बन्धानतिदिशति—

**आउस्स सबंधपढमसमयेऽण्णयरो कुणेइ अट्ठण्हं।**
**सेसतिबंधाऽण्णयरो सव्वह एमेव सपयाणं ॥५२४॥ (गीतिः)**

(प्रे०) "आउस्स" इत्यादि, अवक्तव्यबन्धमित्यनुवर्तते, आयुषोऽवक्तव्यबन्धं 'सबंधपढमसमये' इति, स्वस्य आयुषो बन्धस्य यः प्रथमः समयः तस्मिन्नन्यतमो जीवः करोति। चतुर्दशजीवभेदेषु कोऽपि जीव आयुर्बन्धप्रारम्भप्रथमसमये आयुषोऽवक्तव्यबन्धं विदधातीति यावत्। अट्ठण्हं "सेसतिबंधाऽण्णयरो" इति, अष्टकर्मणां भूयस्कारोऽल्पतरोऽवस्थितश्चेति शेषत्रिबन्धान् अन्यतमः–चतुर्दशजीवभेदेषु कोऽपि जीवः करोति। कथम् ? इति चेद्, भूयस्कारादिष्व-

नुक्रमेण कारणस्याधिकयोगस्य, हीनयोगस्यावस्थितयोगस्य च चतुर्दशजीवभेदेषु प्रत्येकविधजीवे प्राप्यमाणत्वात् ।

अत्रेदं बोध्यम्—सप्तकर्मणां भूयस्कारोऽधिकयोगप्रयुक्तः, अल्पप्रकृतिबन्धप्रयुक्तोऽधिकयोगाल्पप्रकृतिबन्धोभयप्रयुक्तश्च भवति । आयुषो भूयस्कारस्तु योगाधिक्यप्रयुक्त एव भवति । एवं सप्तकर्मणामल्पतरो हीनयोगप्रयुक्तः, अधिकप्रकृतिबन्धप्रयुक्तः, स्तोकयोगाधिकप्रकृतिबन्धोभयप्रयुक्तश्च भवति । आयुषोऽल्पतरस्तु हीनयोगप्रयुक्त एव भवति । एवमवस्थितबन्धोऽपि सप्तकर्मणां तु तुल्यप्रकृतितुल्ययोगादिभिः त्रिभिरपि कारणैर्भवति । परमायुषस्तु तुल्यप्रकृतितुल्ययोगप्रयुक्त एव ।

'सव्वइ एमेव सगसगपयाणं' इति, अत्र स्वपदेन मार्गणा ग्राह्या, 'स्वामी' इति गम्यते, सर्वासु मार्गणासु अष्टानां कर्मणां स्वस्यां संभाव्यमानानां भूयस्कारादिबन्धानां स्वामी, 'एमेव' इति, ओघवदेव भवति । तत्रास्यामेव गाथायामनन्तरगाथायां चोक्तम् ॥५२४॥

नन्वाद्यगाथायां सप्तकर्मणामवक्तव्यबन्धस्य श्रेणितो निवर्तमानो मनुष्यो भवप्रथमसमयस्थो विबुधश्चेति द्वौ स्वामिनौ निगदितौ, अत्र च सर्वासु मार्गणासु मूलसर्वकर्मणां भूयस्कारादिसर्वविधबन्धस्वाम्योघवद् भवतीत्युक्तं, ततो मनुष्यौघपर्याप्तमनुष्यमानुषीलक्षणत्रिमनुष्येषु, पञ्चमनःपञ्चवचनयोगेषु, औदारिककाययोगे, अवेदे, मनःपर्यवज्ञाने, संयमौघे चेति सप्तदशमार्गणास्वपि सप्तकर्मणामवक्तव्यबन्धस्वामित्वेन तौ द्वावपि भवेतां, परं तदयुक्तं, यद्यपि एतासु मार्गणासु श्रेणितो निवर्तमानस्य मनुष्यस्य सप्तकर्मणामवक्तव्यबन्धस्वामित्वमुपपद्यते, तथापि भवप्रथमसमयस्थस्य त्रिदशस्य तु नैवोपपद्यते, यतस्तासु मनुष्यौघादिमार्गणासु देवस्यासंभवः, मनोयोगादिमार्गणासु देवस्य सम्भवेऽपि भवप्रथमसमयस्थस्य देवस्यासंभव इति चेद् , सत्यम् , अत एव ग्रन्थकार इदानीमतिदेशमपवदितुकाम आह—

णवरं सत्तण्ह कुणइ बंधं णो चिअ सुरो अवत्तव्वं ।
तिणरपणमणवयउरलअवेअमणणाणसंयमेसु च ॥५२५॥(गीतिः)

(प्रे०) 'णवरं' इत्यादि, सुगमम् ।

इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृति-
प्रदेशबन्धे द्वितीये भूयस्काराधिकारे द्वितीयं
स्वामित्वद्वारं समाप्तम् ॥

## ॥ तृतीयं कालद्वारम् ॥

तदेवं द्वितीयं स्वामित्वद्वारं प्ररूपितम् । सम्प्रति प्रत्येकं मूलप्रकृतेः प्रत्येकं भूयस्कारादि-बन्धो जघन्यत उत्कृष्टतश्च कियत्कालं यावद् भवतीति प्रश्नावकाशमाशङ्क्य तदपनोदाय क्रमायातं कालद्वारं प्रतुष्टूषुरादौ तावदष्टकर्मणां भूयस्कारादिचतुर्विधबन्धस्य जघन्यकालं भूयस्काराल्पतरबन्ध-योरुत्कृष्टकालं च चिन्तयति—

समयो लहू चउण्हं भूओगाराइगाण अट्ठण्हं ।
भूगारप्पयराणं भिन्नमुहुत्तं भवे जेट्ठो ॥५२६॥

(प्रे०) 'समयो' इत्यादि, अष्टकर्मणां 'भूओगाराइगाण' इति, भूयस्कार आदौ येषां ते भूयस्कारादिका इति तद्गुणसंविज्ञानबहुव्रीहिः, "शेषाद् वा" (सिद्धहेम० ७।३।१७५) इति 'कच्' प्रत्ययः, भूयस्कारादीनां भूयस्काराल्पतरावस्थितावक्तव्यलक्षणानां चतुर्णां प्रदेशबन्धानां प्रत्येकं, काल इति गम्यते, जघन्यः कालः समयो भवति । इयमत्र भावना—यावत्कालं स्वकारण-कूटस्य सत्ता तावत्कालं कार्यं भवत्यतो भूयस्कारादिबन्धानां कारणानि यावत्कालं भवन्ति ताव-त्कालं भूयस्कारादिबन्धरूपं कार्यं भवति । ततो भूयस्कारबन्धादीनां कालस्य निर्णयार्थं तेषां कारणानां कालश्चिन्तनीयः । अतोऽत्र भूयस्कारादिबन्धेषु कारणानामधिकयोगादीनां कालः चिन्त्यते ।

तद्यथा—भूयस्कारबन्धे एकं तावद्योगाधिक्यं कारणम् । तच्च जघन्यत एकसमयं भवति, उत्कृष्टादिसर्वविधयोगस्य जघन्यत एकसमयमवस्थानात् । द्वितीयं कारणमल्पप्रकृतिबन्धः । स च जघन्यत उत्कृष्टतो वैकमेव समयं यावदवतिष्ठते, तदनन्तरं तावतामेवाधिकानां वा कर्मणां बध्यमान-त्वात् । तृतीयं कारणं योगाधिक्याल्पप्रकृतिबन्धावुभयौ । तावुभयावपि जघन्यत एकसमयमेवाव-तिष्ठेते । अल्पतरबन्धे योगहानिरधिकप्रकृतिबन्धस्तदुभयौ चेति त्रीणि कारणानि । तानि त्रीण्यपि भूयस्कारबन्धकारणावस्थानोक्तहेतुभिर्जघन्यत एकसमयं यावदेवावतिष्ठन्ते । अवस्थितबन्धे एकं तावत् तुल्यप्रकृतिबन्धतुल्ययोगौ कारणम् , द्वितीयं कारणमधिकप्रकृतियोगाधिक्यौ । तृतीयं कारणं योगहान्यल्पप्रकृतिबन्धौ । अत्र त्रिष्वपि कारणेषु योगस्य समावेशात् योगस्य च जघन्यत एक-सामयिकत्वात् त्रीण्यपि कारणानि जघन्यत एकसमयमेवावतिष्ठन्ते । इत्येवं भूयस्काराल्पतरावस्थित-बन्धाः स्वकारणानां जघन्यत एकसामयिकत्वाज्जघन्यत एकसमयमेव भवन्ति । अवक्तव्यबन्धस्तु तल्लक्षणे एवैकसमयसमावेशाज्जघन्यत उत्कृष्टतो वैकसमयमेवावतिष्ठते । यतो यदा प्रकृतेर्बन्धविच्छे-दादिनाऽबन्धो भूत्वा पुनर्बन्धो नव्यबन्धो वा भवति तदा 'पुनर्बन्धस्य नव्यबन्धस्य वा प्रथम-समये' एवावक्तव्यबन्धो भवतीति तल्लक्षणमस्ति । "भूगारप्पयराणं" इत्यादि, पूर्वार्धस्थम् 'अट्ठण्हं' इति पदं 'घण्टालोलान्यायेन' अत्रापि सम्बध्यते, अष्टकर्मणां भूयस्काराल्पतरबन्धयोरुत्कृष्ट-

कालो भिन्नमुहूर्तम्–अन्तर्मुहूर्तं भवति। इयमत्र भावना–भूयस्कारप्रदेशबन्धे योगाधिक्यादीनि त्रीणि अल्पतरप्रदेशबन्धे च योगहान्यादीनि त्रीणि पृथक् पृथक् कारणानि सन्ति। तत्र यद्यपि अल्पप्रकृतिबन्धप्रयुक्तोऽल्पप्रकृतिबन्धयोगाधिक्योभयप्रयुक्तश्च भूयस्कारः स्वकारणस्याल्पप्रकृतिबन्धस्योत्कृष्टतोऽप्येकमेव समयं यावदवस्थानादुत्कृष्टतोऽप्येकमेव समयमवतिष्ठते, तथापि योगवृद्धिप्रयुक्तो भूयस्कार उत्कृष्टतोऽन्तर्मुहूर्तं यावत् प्रवर्तते, असंख्येयगुणस्वरूपवृद्धेरुत्कृष्टतोऽन्तर्मुहूर्तं यावत् सद्भावात्। एवमधिकप्रकृतिबन्धप्रयुक्तोऽधिकप्रकृतिहीनयोगोभयप्रयुक्तश्चाल्पतरबन्ध उत्कृष्टतोऽप्येकमेव समयमवतिष्ठते। किन्तु योगहानिप्रयुक्तोऽल्पतरप्रदेशबन्ध उत्कृष्टतोऽन्तर्मुहूर्तं यावद् भवति, योगहानेरुत्कृष्टतोऽन्तर्मुहूर्तं यावत्सद्भावाद्।

इदमुक्तं भवति–पूर्वं योगस्थानप्ररूपणायां योगस्थानानां वृद्धिर्हानिश्च चतुर्धा प्रतिपादिता। तद्यथा–असंख्येयभागवृद्धिः, संख्येयभागवृद्धिः, संख्यातगुणवृद्धिरसंख्यातगुणवृद्धिश्चेति चतुर्धा वृद्धिः। एवमसंख्येयभागहानिः, संख्येयभागहानिः, संख्यातगुणहानिरसंख्यातगुणहानिश्चेति चतुर्धा हानिः। तत्र तथाविधतीव्रवीर्यान्तरायक्षयोपशमतः पूर्वसमयादनन्तरविवक्षितयोगस्थानादसंख्येयगुणवृद्धेऽन्यस्मिन्योगस्थाने जीवस्य गमनरूपा योगस्थानानामसंख्येयगुणवृद्धिस्तथाविधमन्दवीर्यान्तरायक्षयोपशमतः पूर्वसमयादनन्तरसमये विवक्षितयोगस्थानादसंख्येयगुणहीनेऽन्यस्मिन् योगस्थाने जीवस्य गमनरूपा योगस्थानानामसंख्येयगुणहानिश्च प्रत्येकं यदि निरन्तरं भवेत् तदोत्कृष्टतोऽन्तर्मुहूर्तं यावद् भवेत्। शेषा असंख्येयभागवृद्ध्याद्यास्तिस्रो वृद्धयोऽसंख्येयभागहान्याद्यास्तिस्रो हानयो वोत्कृष्टतो निरन्तरमावलिकाऽसंख्येयभागकालं यावद् भवन्ति। तदनन्तरं योगस्थानानामवस्थानं, विपरीतम्, अन्यप्रकारा वृद्धिर्हानिर्वा भवन्ति। ततोऽसंख्यगुणयोगवृद्ध्यादिप्रयुक्तो भूयस्कारप्रदेशबन्धोऽसंख्येयगुणहान्यादिप्रयुक्तोऽल्पतरप्रदेशबन्धश्चोत्कृष्टतोऽन्तर्मुहूर्तं यावद् भवति।

ननु प्रथममन्तर्मुहूर्तं यावदसंख्यगुणा वृद्धिः, ततः संख्यातगुणा वृद्धिः, ततः संख्यातभागवृद्धिः, ततोऽसंख्यातभागवृद्धिर्भवेत्। एवं हानिरपि। ततो भूयस्कारप्रदेशबन्धस्याल्पतरप्रदेशबन्धस्य चान्तर्मुहूर्त्तादधिककालः कथं न भवेद्? इति चेद्, न, शेषाणां संख्यातगुणादिरूपाणां तिसृणां वृद्धीनां हानीनां च प्रत्येकं कालस्योत्कृष्टतोऽप्यावलिकाऽसंख्येयभागमात्रत्वाद्। ततो यदि भवदुक्तरीत्या चतस्रोऽपि वृद्धयो हानयो वा निरन्तरं भवेयुस्तर्हि तासां वृद्धीनां हानीनां वा समुदितोऽपि कालोऽन्तर्मुहूर्त्तप्रमाण एव भवेत्, नाधिकः। ननु सत्यमेतद्, यद् वृद्धिचतुष्कस्य समुदितोऽपि कालोऽन्तर्मुहूर्तप्रमाण एव भवति। परं यदा प्रथममन्तर्मुहूर्तं यावदसंख्यगुणा योगवृद्धिः, ततः संख्यातगुणा योगवृद्धिरित्येवं प्रथमं वृद्धिचतुष्कं भवति, पुनर्द्वितीयवारमेवं वृद्धिचतुष्कं भवति, एवमेव तृतीयवारं वृद्धिचतुष्कं भवति, पुनश्चतुर्थवारं भवतीत्येवं पुनः पुनर्निरन्तरमनेकवृद्धिचतुष्काणि भवेयुस्तदा त्वन्तर्मुहूर्त्तादधिकेन कालेन भाव्यम्, एवं हानावपीति चेद् न, एवमप्यन्तर्मुहूर्तं

यावदेव भवति । तदनन्तरमवश्यमवस्थानं विपरीतं वा भवेत्, वृद्धिहान्यन्यतरोत्कृष्टान्तरस्याप्यन्तर्मुहूर्तमात्रत्वात् । अर्थाद्यदा निगदितरीत्या निरन्तरं वृद्धिर्भवेत् तदाऽप्यन्तर्मुहूर्तं यावदेव भवेत् । तदनन्तरमवश्यमवस्थानं हानिर्वा भवेत् । एवं हानिरप्यन्तर्मुहूर्तं यावदेव भवेत् । तदनन्तरमवस्थानं वृद्धिर्वा भवेत् ।५२६। इदानीमष्टकर्मणामवक्तव्यप्रदेशबन्धस्य सप्तकर्मणामवस्थितप्रदेशबन्धस्य चोत्कृष्टकालं प्ररूपयन्नाह—

अट्ठण्ह गुरू समयो अत्थि अवत्तव्वगस्स समयाऽत्थि ।
एगारह पंचदस व अवट्ठिअस्साउवज्जाणं ॥५२७॥

(प्रे०) अट्ठण्ह' इत्यादि, अष्टकर्मणाम् "अवत्तव्वगस्स" इति, "स्वार्थे कश्च वा" (सिद्धहेम० ८।२।१६४) इति स्वार्थे कप्रत्ययः, अवक्तव्यप्रदेशबन्धस्योत्कृष्टकालः 'एकसमयः' अस्ति । अत्र हेतुरनन्तरगाथायामेव जघन्यकालस्यैकसामयिकत्वोपपादनप्रसङ्गेऽभिहित इति तत्रतोऽवसेयः । "समयाऽत्थि" इत्यादि, आयुर्वर्जानां ज्ञानावरणीयादिसप्तकर्मणामवस्थितप्रदेशबन्धस्योत्कृष्टः कालः "पञ्चदशसमयाः एकादशसमयाः" वा भवति ।

इदमत्र हृदयम्—एकस्मिन्नेव योगस्थाने जीव उत्कृष्टतोऽष्टौ समयान् यावदवतिष्ठते, ततोऽवश्यं योगस्थानान्तरं यातीति पूर्वं योगस्थानप्ररूपणागतसमयप्ररूपणायां निरूपितम् । अतोऽष्टसमयप्रमाणस्य योगावस्थानस्य प्रथमे समये भूयस्कारोऽल्पतरो वा प्रदेशबन्धो भवति, अव्यवहितपूर्वसमयापेक्षया तस्मिन्योगस्याधिकत्वाद्धीनत्वाद् वा । ततो द्वितीयसमयादारभ्याष्टमसमयपर्यन्तेषु सप्तसमयेषु अवस्थितप्रदेशबन्धो भवति । ततो नवमे समये संख्येयभागवृद्धमन्यद् योगस्थानं प्राप्यते । तस्मिंश्च योगस्थानेऽष्टौ समयान् यावज्जीवोऽवस्थितो भवतीति तत्रापि नवमसमयादारभ्य षोडशसमयपर्यन्तेष्वष्टसमयेषु अवस्थितप्रदेशबन्धो भवति । इति प्रथमयोगावस्थानसत्कस्यावस्थितप्रदेशबन्धस्य सप्तसमयाः संख्यातभागवृद्धिसहितद्वितीययोगावस्थानसम्बन्धिनोऽवस्थितप्रदेशबन्धस्य चाष्टौ समया मीलिताः पञ्चदश समया भवन्ति ।

ननु यथाऽष्टसमयप्रमाणप्रथमयोगावस्थानस्य प्रथमे समयेऽव्यवहितपूर्वसमयापेक्षया योगस्याधिकत्वाद् भूयस्कारप्रदेशबन्धो हीनत्वादल्पतरप्रदेशबन्धो वा भवति तथैव द्वितीययोगावस्थानप्रथमसमयेऽपि प्रथमयोगावस्थानान्तिमसमयापेक्षया योगस्याधिकत्वाद् भूयस्कारप्रदेशबन्धेन भाव्यमिति कथमवस्थितप्रदेशबन्ध उच्यते ? इति चेद् ; सत्यम् ; अत एव तदानीमायुर्बन्धप्रारम्भोऽपि वक्तव्यः । इदमुक्तं भवति— यथा नवमे समये जीवेनान्ययोगस्थानं प्राप्यते तथैवायुर्बद्धमपि प्रक्रम्यते । ततो यद्यपि योगाधिक्यापेक्षया पूर्वसमयात् कर्मदलिकानां बन्धोऽधिको भवति तथापि पूर्वसमयाद् भागहराणामधिकत्वात्प्रत्येकं कर्मणः स्वतया परिणतानि कर्मदलिकानि तु पूर्वसमयदलिकप्रमाणान्येव भवन्ति । यावन्ति कर्मदलिकान्यधिकानि बध्यन्ते तावन्त्यायुष्कतया परिणमन्तीति सप्तकर्मणां स्वतया परिणतानि कर्मदलिकानि तु पूर्वसमयदलिकतुल्यान्येव भवन्ति । एवं हानिमाश्रित्यापि वक्तव्यम् । अयं भावः— नवमे समये यथा संख्येयभागवृद्धमन्यद् योगस्थानं प्राप्यते तथा कदाचित् संख्येयभागहीनमपि

योगस्थानं प्राप्यते । अतो यदि संख्यातहीनं योगस्थानमाश्रित्य प्रकृतकाल उपपाद्यते तर्हि तदानीमायुर्बन्धविरामोऽपि वक्तव्यः । अर्थात् पूर्वसमयेऽष्टप्रकृतीर्बध्नन् सप्तप्रकृतीर्बध्नातीति वक्तव्यम् । तदसत्कल्पनया प्रदर्श्यते–सप्तकर्माणि बध्नता जीवेन प्रथमयोगावस्थानान्तिमसमये पञ्चसहस्राणि कर्मदलिकानि बद्धानि । तेषु नवशतानि वेदनीयतया परिणतानि । अष्टशतानि मोहनीयतया परिणतानि । ज्ञानावरणीयदर्शनावरणीयान्तरायाणां प्रत्येकं स्वतया सप्तशतानि परिणतानि । नामगोत्रकर्मणोः प्रत्येकं स्वतया षट्शतानि परिणतानि । अथ तदनन्तरसमयेऽष्टकर्माणि बध्नता तेन पञ्चशताधिकपञ्चसहस्राणि कर्मदलिकानि बद्धानि । अत्र यानि पञ्चशतानि कर्मदलिकान्यधिकानिबद्धानि तान्यायुष्कतया परिणतानि । शेषकर्मसु कर्मदलिकपरिणतिः पूर्ववद् । एवं हानिमाश्रित्याप्यसत्कल्पना विधेया । इत्येवं द्वितीययोगावस्थानप्रथमसमये स्वाव्यवहितपूर्वसमयापेक्षया योगस्याधिक्येऽपि यद्वा हानावपि सप्तकर्मणामवस्थितप्रदेशबन्ध एव भवति, न भूयस्कारप्रदेशबन्धः, नाप्यल्पतरबन्धः । अथवा मतान्तरेण "एकादशसमयान्" यावत् सप्तकर्मणामवस्थितप्रदेशबन्धो भवति । कथम् ? इति चेद्, मतान्तरे योगस्थानेषु योगस्पर्धकाद्विगुणवृद्धिनिष्पादकान्तरं यथोत्तरं द्विगुणं द्विगुणमभिमतमित्यष्टसामयिकावस्थानादनन्तरं चतुःसामयिकावस्थानप्रायोग्ययोगस्थानेषु गच्छतो जीवस्यैव संख्येयभागाधिकयोगवृद्धेः सम्भवेनाधिकप्रकृतिबन्धसंविद्धाऽष्टमसमयावस्थानादूर्ध्वं समयत्रयं यावदेव तावन्मात्रप्रदेशबन्धलक्षणस्याऽवस्थानस्य लाभाद् । अत्र सप्त-षट्-पञ्चसमयान् यावदवस्थानप्रायोग्याणां योगस्थानानां वर्जनं तत्र गच्छतायुरुत्कृष्टतोऽप्यसंख्येयभागमात्रयोगवृद्धेः सम्भवेन तत्प्रथमसमये एव प्रदेशबन्धावस्थानभङ्गप्रसङ्गाज्ज्ञेयम् । विस्तरार्थिना तु योगस्थानवृत्तिर्विलोकनीयेति ।५२७।

साम्प्रतमोघत आयुषोऽवस्थितप्रदेशबन्धस्योत्कृष्टकालमादेशतश्च सर्वासु मार्गणासु स्वप्रायोग्याणां कर्मणां स्वस्यां सम्भाव्यमानानां भूयस्कारादिबन्धानामुत्कृष्टं जघन्यं च कालमतिदेशमुखेनाह–

**आउस्स सत्त समया सव्वासु मग्गणासु हस्सियरो ।**
**सगसगबंधाण भवे सप्पाउग्गाण ओघव्व ॥५२८॥**

(प्रे०) "आउस्स" इत्यादि, 'अवस्थितप्रदेशबन्धस्योत्कृष्टकालः' इति पूर्वगाथातोऽत्र सम्बध्यते, आयुषोऽवस्थितप्रदेशबन्धस्योत्कृष्टकालः 'सप्तसमयाः' भवति । प्राग्दृष्टसमयप्रमाणे प्रथमावस्थाने प्रथमसमयं भूयस्काराल्पतरान्यतरप्रदेशबन्धो भवतीति प्रथममेकसमयमन्तरा शेषेषु सप्तसमयेषु अवस्थितबन्धो भवति । द्वितीयावस्थानस्य प्रथमसमये आयुर्बन्धस्य पूर्वसमयेऽपि सत्त्वादधिकप्रकृतिबन्धाभावेनाधिकयोगस्यैवाल्पयोगस्यैव वा सत्त्वाद् भूयस्काराल्पतरान्यतरप्रदेशबन्धो भवतीति सप्तप्रकृतीनामवस्थितकालवत् पञ्चदशसमया न भवति ।

**'सव्वासु मग्गणासु'** इति, सर्वासु सप्ततिशते मार्गणासु, किम् ? इत्याह **'हस्सियरो'** इति, जघन्य इतरश्चोत्कृष्टः कालः, कस्य ? इत्याह **"सगसगबंधाण"** इति, स्वस्वबन्धानां यस्यां मार्गणायां यावन्तो भूयस्कारादयो बन्धाः सम्भवन्ति तस्यां तावतां भूयस्कारादिबन्धानां;

कस्य कर्मणः ? इत्याह–"सप्पाउग्गाण" इति, स्वप्रायोग्याणां यस्यां मार्गणायां यावन्ति षट् सप्ताष्टौ वा कर्माणि बध्यन्ते तावतां कर्मणां, कियान् काल इत्याह–'ओघव्व' इति; ओघवद् भवेत् । यस्यां मार्गणायां यावन्ति कर्माणि बध्यन्ते यावन्तश्च भूयस्कारादिबन्धा भवन्ति तस्यां मार्गणायां तावत्कर्मणां तावद्भूयस्कारादिबन्धानां जघन्य उत्कृष्टश्च कालः सामान्यवक्तव्यतायां यस्य कर्मणो यस्य भूयस्कारादिप्रदेशबन्धस्य यावान् जघन्य उत्कृष्टश्च कालो निरूपितस्तावान् भवेदित्यर्थः । तद्यथा–अष्टानामपि कर्मणां भूयस्कारादिचतुर्बन्धानां जघन्यकालोऽवक्तव्यप्रदेशबन्धस्योत्कृष्टकालश्च 'एकसमयः' भूयस्काराल्पतरप्रदेशबन्धयोरुत्कृष्टकालः 'अन्तर्मुहूर्त्तं' भवति । सप्तकर्मणामवस्थितबन्धस्योत्कृष्टकालः "पञ्चदशैकादश वा समयाः" आयुषोऽवस्थितबन्धस्योत्कृष्टकालः "सप्तसमयाः" भवति ॥५२८॥ इदानीं कतिपयमार्गणासु कृतातिदेशमपवदितुकाम आह—

णवरं भिन्नमुहुत्तं दुमीसजोगेसु होअइ जहण्णो ।
भूगारस्स दुसमया कम्माणाहारगेसु गुरू ॥५२९॥

(प्रे०)"णवरं" इत्यादि, नवरं वैक्रियमिश्राहारकमिश्रलक्षणद्विमिश्रकाययोगयोः सप्तकर्मणां, 'भूगारस्स' इत्युत्तरार्धस्थं पदं 'मध्यमणिन्यायेन' अत्रापि सम्बध्यते, भूयस्कारप्रदेशबन्धस्य जघन्यकालः 'अन्तर्मुहूर्त्तं' भवति । कथम् ? इति चेद् , 'सव्वोऽवि अपज्जत्तगो' इत्यादिवचनाद् मार्गणायाः प्रथमसमयादारभ्यान्तिमसमयं यावत्पूर्वपूर्वसमयादुत्तरोत्तरसमयेऽसंख्यगुणयोगवृद्धिर्भवतीति मार्गणाकालं यावदन्यस्य कस्यापि प्रदेशबन्धस्याप्रवर्तनाद् भूयस्कारप्रदेशबन्ध एव भवति । द्वयोरपि मार्गणयोर्जघन्योऽपि कालोऽन्तर्मुहूर्तप्रमाण इति भूयस्कारप्रदेशबन्धो जघन्यतोऽप्यन्तर्मुहूर्त्तं यावद् भवति।

ननु आहारकमिश्रमार्गणायां प्रतिसमयं योगासंख्येयगुणवृद्धिसद्भावाद् यथा सप्तकर्मणां भूयस्कारप्रदेशबन्धस्य जघन्यः कालोऽन्तर्मुहूर्त्तं भवति तथाऽऽयुषो भूयस्कारप्रदेशबन्धकालोऽपि अन्तर्मुहूर्त्तं कथं न भवति ? आयुर्बन्धकालेऽपि योगासंख्येयगुणवृद्धिसद्भावादिति चेद् , न, आहारकमिश्रमार्गणोपान्त्यसमयादायुर्बद्धुमुपक्रमेतेत्यायुर्बन्धप्रारम्भाद् द्वितीयसमये मार्गणायाश्च चरमसमये भूयस्कारप्रदेशबन्धं कुर्यात् । तृतीयसमये मार्गणाविच्छेदः । इत्याहारकमिश्रमार्गणायामायुषो भूयस्कारप्रदेशबन्धस्य जघन्यः कालः 'एकसमयः' भवति, नान्तर्मुहूर्त्तम् ।

'दुसमया' इत्यादि, कार्मणकाययोगानाहारकयोरायुषोऽबध्यमानत्वात्सप्तकर्मणामिति गम्यते, भूयस्कारप्रदेशबन्धस्योत्कृष्टकालः "द्वौ समयौ" भवति । इयमत्र भावना–वैक्रियमिश्रादिवदनयोर्मार्गणयोरपि मार्गणाकालं यावदसंख्यगुणयोगवृद्धिर्भवति । परन्त्वनयोर्मार्गणयोरुत्कृष्टकालः त्रिसमयमात्र एव, तदनन्तरं मार्गणाया विनाशः । तत्रापि मार्गणाप्रथमसमये भूयस्कारप्रदेशबन्धो वक्तुं न शक्यते, इत्यत्रोत्कृष्टतोऽपि द्वौ समयौ यावदेव भूयस्कारबन्धो भवति ।

नन्वपगतवेदोपशममार्गणयोर्जीवः सूक्ष्मसम्परायगुणस्थानेऽन्तिमाष्टसमयेषु विवक्षितयोगस्थानेऽवस्थितो भवतीति तेषु भूयस्कारबन्धप्रथमसमयं विहाय सप्तसमयेषु षट्कर्मणामवस्थितप्रदेशबन्धो भवति । तदनन्तरमनिवृत्तिबादरसम्परायप्रथमसमयेऽन्ययोगस्थानं याति । तत्राप्यष्टौ समयान् यावदवतिष्ठते । तत्र प्रथमे समये मोहनीयं बद्धं प्रक्रमत इत्यनिवृत्तिबादरसम्परायेऽष्टौ समयान् यावद् मतान्तरेण च चतुःसमयान् यावत्षट्कर्मणामवस्थितबन्धो भवति । इत्येवं तयोः षट्कर्मणामवस्थितबन्धस्य कालः ओघवत्=पञ्चदशैकादश वा समया घटां याति । परन्तु मोहनीयस्यावस्थितबन्धस्य तावान् कालो नोपपद्यतेऽपि तु प्रथमोत्कृष्टयोगावस्थानेन सप्तसमया एवोपपद्यते । कथम् ? इति चेद्, तयोरायुषोऽबध्यमानत्वाद् द्वितीयोत्कृष्टयोगावस्थानप्रथमसमयेऽधिकप्रकृतिबन्धस्याप्राप्यमाणत्वादवस्थितबन्धस्याग्रेऽप्रवर्तनाद् । ओघतो यः पञ्चदशैकादश वा समयाः काल उपपादितः स तु द्वितीयोत्कृष्टयोगावस्थानप्रथमसमयेऽधिकप्रकृतिबन्धमन्यप्रकृतिबन्धं चाश्रित्योपपादितः । एवमेव सूक्ष्मसम्परायमार्गणायां षण्णां मिश्रमार्गणायां च सप्तानामेव कर्मणां बन्धोऽस्तीति तयोरनुक्रमेण षण्णां सप्तानां च कर्मणामवस्थितबन्धस्योत्कृष्टकालः सप्तसमया एवोपपत्तिं यातीति चेद्, सत्यम्, मा त्वरिष्ठाः, अत एव ग्रन्थकार इदानीं पुनरप्यपोद्य ऽस्तुतकालद्वारं समापयति—

गयवेअउवसमेसुं मोहस्स अवट्ठिअस्स उक्कोसो ।
सत्तसमया हवेज्ज सजोग्गाणं सुहममीसेसुं ॥५२०॥

(प्रे०) 'गयवेअ' इत्यादि, निगदसिद्धम् ।

॥ इति श्रीप्रेमप्रभाटीकासमलङ्कृते बन्धविधाने मूलप्रकृतिप्रदेशबन्धे
द्वितीये भूयस्काराधिकारे तृतीयं
कालद्वारं समाप्तम् ॥

## ॥ चतुर्थमन्तरद्वारम् ॥

तदेवं तृतीये कालद्वारे भूयस्कारादिप्रदेशबन्धः प्रत्येकं निरन्तरं कियत्कालं यावद् भवतीति निरूपितम् । इदानीं भूयस्कारादिप्रदेशबन्धः प्रत्येकं यदा निरन्तरं न भवति तदा जघन्यत उत्कृष्टतश्च कियत्कालं यावद् न भवतीत्याशङ्कामपनेतुं द्विभूयस्कारादिप्रदेशबन्धान्तरालकाललक्षणान्तरविषयकमन्तरद्वारं वक्तुमुपचिक्रंसयादौ तावदोघतोऽष्टकर्मणां भूयस्कारादिचतुर्विधप्रदेशबन्धस्य जघन्यमवस्थितप्रदेशबन्धस्योत्कृष्टञ्चान्तरं निर्वक्ति—

अट्ठण्ह मुहुत्तंतोऽवत्तव्वस्संतरं लहुं समयो ।
सेसाण तिण्ह सेढिअसंखंसोऽवट्ठिअस्स गुरुं ॥५३१॥

(प्रे०) 'अट्ठण्ह' इत्यादि, ज्ञानावरणीयाद्यष्टकर्मणामवक्तव्यप्रदेशबन्धस्य जघन्यमन्तरमन्तर्मुहूर्तं भवति । कथम् ? इति चेद्, उपशमश्रेणिद्विकालन्तराकालस्य जघन्यतोऽप्यन्तर्मुहूर्तत्वेन तत्प्रयुक्तजघन्यान्तरस्यान्तर्मुहूर्तप्रमाणत्वाद् । इदमुक्तं भवति—आयुरन्तरा सप्तकर्मणामवक्तव्यप्रदेशबन्ध उपशमश्रेणावेव भवति । तत्र षण्णां कर्मणां मोहनीयस्य चावक्तव्यप्रदेशबन्ध उपशमश्रेणितो निपततो जीवस्यानुक्रमेण सूक्ष्मसम्परायप्रथमसमयेऽनिवृत्तिबादरसम्परायप्रथमसमये च भवति । अतो जीवः सकृदुपशमश्रेणौ यथोक्तकालेऽवक्तव्यप्रदेशबन्धं कृत्वा यावता कालेन द्वितीयवारमुपशमश्रेणिमारुह्य यथोक्तकाले पुनरवक्तव्यप्रदेशबन्धं कुर्यात्तावत्कालोऽवक्तव्यप्रदेशबन्धस्यान्तरं भवति । द्वितीयवारमुपशमश्रेणिप्राप्तिश्च जघन्यतोऽपि व्यतीतेऽन्तर्मुहूर्ते भवति । अतः सकृदवक्तव्यप्रदेशबन्धो भूत्वा पुनर्जघन्यतोऽन्तर्मुहूर्तकाले व्यतीते भवतीति सप्तकर्मणामवक्तव्यप्रदेशबन्धस्यान्तरमन्तर्मुहूर्तं भवति । एवमायुषोऽवक्तव्यप्रदेशबन्धो यदाऽऽयुर्बन्धं कुर्यात् तदा तत्प्रथमसमये भवति । अतः सकृदायुर्बन्धं विधाय पुनर्जघन्यतः यावता कालेन कुर्यात् तावान् काल आयुषोऽवक्तव्यप्रदेशबन्धस्य जघन्यमन्तरं भवति । आयुराकर्षद्वयस्य जघन्यमन्तरमन्तर्मुहूर्तमस्तीति सकृदायुर्बन्धं विधाय पुनर्जघन्यतोऽन्तर्मुहूर्ते व्यतीते करोति । अत आयुषोऽवक्तव्यप्रदेशबन्धस्य जघन्यमन्तरमप्यन्तर्मुहूर्तं भवति । इत्येवमष्टानामपि कर्मणामवक्तव्यप्रदेशबन्धस्य जघन्यमन्तरमन्तर्मुहूर्तं सूपपन्नम् ।

'सेसाण तिण्ह' इत्यादि, ज्ञानावरणीयाद्यष्टकर्मणां शेषाणां भूयस्काराल्पतरावस्थितलक्षणानां त्रिप्रदेशबन्धानां जघन्यमन्तरं समयमात्रं भवति, त्रयाणामपि स्वप्रवृत्तिकारणयोगान्तरकालस्य जघन्यत एकसामयिकत्वाद् । अयमत्र भावः—यदा विवक्षितप्रथमसमयेऽधिकयोगाद् भूयस्कारः, द्वितीयसमयेऽल्पयोगादल्पतरः, तृतीयसमये पुनरधिकयोगाद् भूयस्कारस्तदा भूयस्कारस्य जघन्यमन्तरमेकसमयो भवति । एवं यदा योगो विवक्षितप्रथमसमयेऽल्पः, द्वितीयसमयेऽधिकतः, तृतीयसमये पुनरल्पस्तदाऽल्पतरप्रदेशबन्धस्य जघन्यमन्तरमेकसमयो भवति । अथ यदा योगतौल्यादिना विवक्षितप्रथमसमयेऽवस्थितप्रदेशबन्धः, द्वितीयसमये योगहान्याऽल्पतरप्रदेशबन्धो

योगाधिक्येन भूयस्कारप्रदेशबन्धो वा, तृतीयसमये पुनर्योगतौल्यादिनाऽवस्थितप्रदेशबन्धो भवति तदाऽवस्थितप्रदेशबन्धस्य जघन्यमन्तरमेकसमयो भवति ।

'सेढिअसंखंसो'इत्यादि, अष्टकर्मणामवस्थितप्रदेशबन्धस्योत्कृष्टमन्तरं 'श्रेण्यसंख्यातभागः' भवति । कथम् ? इति चेद्, स्वप्रवृत्तिकारणयोगावस्थानोत्कृष्टान्तरकालस्य तावत्प्रमाणत्वाद् । इदमत्र हृदयम्—सकृदवस्थितयोगे प्राप्ते पुनरुत्कृष्टतः श्रेण्यसंख्यातभागे व्यतीते प्राप्यते, श्रेण्यसंख्यातभागे व्यतीते पुनरवश्यं प्राप्यते इत्यर्थः । कथम् ? इति चेद्, तथास्वाभाव्यमेवात्र बीजम् ।

नन्ववस्थितयोगस्य श्रेण्यसंख्यातभागे व्यतीते प्राप्यमाणत्वादवस्थितप्रदेशबन्धस्य त्रिकारणान्तस्तुल्यप्रकृतिबन्धतुल्ययोगलक्षणकारणस्य तावत्कालमभावोऽस्तु, परन्तु शेषे अधिकप्रकृतिबन्धतत्प्रायोग्यसंख्यातभागाधिकयोगाल्पप्रकृतिबन्धतत्प्रायोग्यसंख्यातभागाल्पयोगलक्षणे द्वे कारणे श्रेण्यसंख्यातभागकालात् प्राक् प्राप्येते न वा ? प्राप्येते चेत्तर्हि अवस्थितबन्धस्योत्कृष्टमन्तरं श्रेण्यसंख्यातभागः कथमुपपद्येत ? इति चेद्, सत्यम्, अत्रावस्थितयोगान्तरमुपलक्षणम्, तेनोत्कृष्टतः त्रीण्यपि कारणानि श्रेण्यसंख्यातभागकालं यावद् न प्राप्यन्ते । तदनन्तरं चावश्यं त्रिकारणान्तःकस्याप्येकस्य कारणस्य प्राप्तिर्भवति ॥५३१॥

साम्प्रतमायुषः शेषभूयस्कारादित्रिप्रदेशबन्धानां सप्तकर्मणां भूयस्काराल्पतरप्रदेशबन्धयोश्चोत्कृष्टमन्तरं प्रतिपादयति—

साहियतेत्तीसुदही जेट्ठं आउस्स सेसतिपयाणं ।
भूगाराऽप्पयराणं सत्तण्ह भवे मुहुत्तंतो ॥५३२॥

(प्रे०) "**साहियतेत्तीसुदही**" इत्यादि, आयुषः शेषाणां भूयस्काराल्पतरावक्तव्यप्रदेशबन्धलक्षणत्रिपदानामुत्कृष्टमन्तरं "साधिकत्रयस्त्रिंशत्सागरोपमाणि" भवति । अत्रेयं भावना—आयुषः सर्वदाऽबध्यमानत्वाद्यदाऽऽयुषो बन्धो भवति तदा प्रथमादिसमयेषु यथायोगमवक्तव्यादिप्रदेशबन्धा भवन्ति । ततो द्विरायुर्बन्धोत्कृष्टान्तरमायुषो भूयस्कारादिप्रदेशबन्धानामुत्कृष्टमन्तरं भवति । द्विरायुर्बन्धस्योत्कृष्टान्तरं च साधिकत्रयस्त्रिंशत्सागरोपमाणि भवति । तद्यथा—पूर्वकोट्यायुष्कः कश्चिद् मनुष्यस्तिर्यग् वा पूर्वकोटिचरमत्रिभागाद्यान्तर्मुहूर्ते त्रयस्त्रिंशत्सागरोपमप्रमाणं यथायोगं देवायुर्नरकायुर्वा बध्नाति, ततः पूर्वकोटिप्रमाणे स्वायुषि समाप्ते पञ्चत्वं प्राप्य यथायोगं त्रयस्त्रिंशत्सागरोपमप्रमाणायुष्केऽनुत्तरविमाने सप्तमनरकावासे वा समुत्पद्यते । तत्र च स्वायुरुपान्त्यान्तर्मुहूर्ते आयुर्बध्नाति । इति द्व्यन्तर्मुहूर्तन्यूनपूर्वकोटित्रिभागाधिकत्रयस्त्रिंशत्सागरोपमाण्यायुर्बन्धस्योत्कृष्टमन्तरं भवति । तत आयुषो भूयस्कादित्रिप्रदेशबन्धानामुत्कृष्टान्तरमपि "द्व्यन्तर्मुहूर्तन्यूनपूर्वकोटित्रिभागाधिकत्रयस्त्रिंशत्सागरोपमाणि भवति ।

'भुगारऽप्पयराणं' इत्यादि, सप्तकर्मणां भूयस्काराल्पतरप्रदेशबन्धयोरुत्कृष्टान्तरं मुहूर्तान्तः 'अन्तर्मुहूर्तं' भवेत् । अयमत्र भावनापथः—असंख्येयगुणादिचतुर्विधाया अपि योगहानेरुत्कृष्टतोऽन्तर्मुहूर्तं यावदेव प्रवृत्तिर्भवति,तदनन्तरमवश्यं योगस्य वृद्धिरवस्थितिर्वा भवतीति भूयस्कारप्रदेशबन्धकारणीभूतयोगवृद्धेरन्तर्मुहूर्तानन्तरमवश्यं प्राप्यमाणत्वात्सप्तकर्मणां भूयस्कारप्रदेशबन्धस्योत्कृष्टमन्तरमन्तर्मुहूर्तप्रमाणं भवति । एवं वैपरीत्येन हानावपि वक्तव्यम् ।

ननु यदा योगहानेः समाप्त्यनन्तरमवस्थितप्रदेशबन्धः स्यात् , तदनन्तरं पुनर्योगहानिः, तदनन्तरं पुनरवस्थितप्रदेशबन्ध इत्यनेकशः क्रमेणाल्पतरावस्थितप्रदेशबन्धौ भूत्वा भूयस्कारप्रदेशबन्धो भवेत् तदा भूयस्कारप्रदेशबन्धस्यान्तरमन्तर्मुहूर्तादधिकं कथं न भवेत् ? एवमल्पतरबन्धेऽपि वाच्यम् , अत्रोच्यते, उक्तक्रमोऽप्यन्तर्मुहूर्तं यावदेव प्रवर्तेत, तदनन्तरमवश्यं विपरीतप्रदेशबन्धो भवति । उक्तक्रमेण यद्यल्पतरप्रदेशबन्धः स्यात् तदाऽन्तर्मुहूर्तानन्तरमवश्यं भूयस्कारप्रदेशबन्धो भवति । एवमुक्तक्रमेण यदि भूयस्कारप्रदेशबन्धः स्यात् तदाऽन्तर्मुहूर्तानन्तरमवश्यमल्पतरप्रदेशबन्धो भवति ॥५३२॥

इदानीं पूर्वार्धेन सप्तकर्मणामवक्तव्यप्रदेशबन्धस्योत्कृष्टमन्तरमाह—

**देसूणाद्धपरट्टो भवे अवत्तव्वगस्स सत्तण्हं ।**

(प्रे०) "देसूणाद्धपरट्टो" इत्यादि, अत्र 'उत्कृष्टम्' इत्यनुवर्तते, 'अन्तरम्' इति गम्यते, सप्तकर्मणामवक्तव्यप्रदेशबन्धस्योत्कृष्टान्तरं 'देशोनार्धपुद्गलपरावर्तः' भवेत् । तद्यथा—उपशमश्रेणितो निपततो जीवस्य षट्कर्मणां सूक्ष्मसम्परायप्रथमसमये मोहनीयस्य चानिवृत्तिबादरसम्पराये प्रथमसमयेऽवक्तव्यप्रदेशबन्धो भवति । यतः सप्तकर्मणामवक्तव्यप्रदेशबन्ध उपशमश्रेणौ भवति, क्षपकश्रेणितः प्रतिपाताभावाद् । अतो द्वयोरुपशमश्रेण्योर्यावदुत्कृष्टमन्तरं तावत्सप्तकर्मणामवक्तव्यप्रदेशबन्धस्योत्कृष्टमन्तरं भवति । द्वयोरुपशमश्रेण्योरुत्कृष्टमन्तरं देशोनार्धपुद्गलपरावर्तो भवति । इदमुक्तं भवति—कश्चिदुपशमक उपशमश्रेणितः प्रतिपत्योक्तस्थाने सप्तकर्मणामवक्तव्यप्रदेशबन्धं कृत्वा देशोनार्धपुद्गलपरावर्तंयावत् संसारे पर्यटति । ततः पुनरुपशमश्रेणिमारुह्य प्रतिपत्योक्तस्थाने सप्तकर्मणामवक्तव्यप्रदेशबन्धं करोतीति सप्तकर्मणामवक्तव्यप्रदेशबन्धस्योपशमश्रेणिद्विकान्तरप्रयुक्तं देशोनार्धपुद्गलपरावर्तप्रमाणमुत्कृष्टमन्तरं भवति ।

तदेवमष्टकर्मणां भूयस्कारादिचतुर्विधप्रदेशबन्धस्यान्तरमोघतः प्ररूपितम् । साम्प्रतं तदेवादेशतो निरूपयति । तत्रादौ सप्तप्रकृतीरधिकृत्य वक्तुकामः यासु मार्गणासु सप्तकर्मणां भूयस्कारप्रदेशबन्धान्तराभावस्ता आह—

**मीसदुजोगेसु तहा कम्मणजोगे अणाहारे ॥५३३॥**

आउगवज्जाण भवे भूओगारस्स अंतरं णेव ।
सेसासु जहण्णियरं भूगाराईण दोण्ह ओघव्व ॥५३४॥

(प्रे०) "मीसदुजोगेसु" इत्यादि, वैक्रियमिश्राहारकमिश्रलक्षणद्विमिश्रकाययोगयोः, तथा समुच्चये, कार्मणकाययोगेऽनाहारके चेति चतुर्मार्गणासु सप्तकर्मणां भूयस्कारप्रदेशबन्धस्यान्तरं नैव भवति । कथम् ? इति चेद् , मार्गणाया द्वितीयसमयादारभ्य चरमसमयं यावदसंख्येयगुणयोगवृद्धेः सत्त्वाद् मार्गणाकालं यावद् भूयस्कारप्रदेशबन्धस्यैव प्रवृत्तेः । अत एवैतासु मार्गणासु सत्पदद्वारेऽल्पतरावस्थितावक्तव्यप्रदेशबन्धानामभावो निरूपितः

सम्प्रति शेषसर्वमार्गणासु सप्तकर्मणां भूयस्काराल्पतरप्रदेशबन्धयोर्जघन्योत्कृष्टान्तरातिदेशमाह–'सेसासु' इत्यादि, शेषासु षट्षष्ट्यधिकशतमार्गणासु सप्तकर्मणां भूयस्काराल्पतरप्रदेशबन्धयोरन्तरम् 'ओघवद्' भवति । तद्यथा–जघन्यमेकसमयः, उत्कृष्टमन्तर्मुहूर्त्तम् । अत्र भावना सामान्यवक्तव्यततो ज्ञेया ॥५३३।५३४॥ सम्प्रति सप्तकर्मणामवस्थितप्रदेशबन्धस्य जघन्यमुत्कृष्टं चान्तरं गाथात्रिकेण निर्धारयति—

जत्थाउगवज्जाणं अवट्ठिओ अत्थि तत्थ तस्स भवे ।
समयो लहु असंखियभागो सेढीअ उक्कोसं ॥५३५॥
तिरिये एगिंदियपणकायणिगोएसु सुहमभेएसु ।
कायणपुंसेसु तह दुअणाणायतअचक्खूसु ॥५३६॥
भवियाभवियेसु तह मिच्छासण्णीसु होइ सेसासु ।
देसूणा उक्कोसा सगसगकायट्ठिई णेयं ॥५३७॥

(प्रे०) 'जत्थाउगवज्जाणं' इत्यादि, यत्र यासु मार्गणासु आयुर्वर्जानां सप्तकर्मणामवस्थितप्रदेशबन्धपदमस्ति तत्र–तासु सर्वासु मार्गणासु तस्य–सप्तकर्मणामवस्थितप्रदेशबन्धस्य जघन्यमन्तरम् 'एकसमयः' भवति । हेतुः सुगमः । अथावस्थितप्रदेशबन्धस्योत्कृष्टमन्तरमाह–"असंखियभागो' इत्यादि, सप्तकर्मणामवस्थितप्रदेशबन्धस्योत्कृष्टमन्तरं "श्रेण्यसंख्यातभागः" भवति । (द्वितीयगाथावृत्तिः) कासु मार्गणासु ? इत्याह–'तिरिये' इत्यादि, तिर्यगोघे, एकेन्द्रियौघे,पृथिव्यप्तेजोवायुवनस्पतिकायलक्षणपञ्चकायौघेषु, निगोदौघे, सूक्ष्मैकेन्द्रिये सूक्ष्मपृथिव्यप्तेजोवायुसाधारणवनस्पतिकायेषु चेति षट्सूक्ष्मौघभेदेषु, काययोगौघे, नपुंसके, तथा समुच्चये, मतिश्रुतलक्षणाज्ञानद्विके, असंयमे, अचक्षुर्दर्शने, (तृतीयगाथावृत्तिः) भव्याभव्ययोः, मिथ्यात्वे, असंज्ञिनि चेति चतुर्विंशतिमार्गणासु । कथम् ? इति चेद् , एतासु मार्गणासु स्वकायस्थितेः श्रेण्यसंख्यातभागतोऽधिकत्वाद् ।

